# RAMEIDOS

## VALMICEIAE

LIBRI SEPTEM.

# RAMAYANA

ID EST

## CARMEN EPICUM

## DE RAMAE REBUS GESTIS

POETAE ANTIQUISSIMI

## VALMICIS

OPUS.

---

TEXTUM CODD. MSS. COLLATIS RECENSUIT
INTERPRETATIONEM LATINAM ET ANNOTATIONES CRITICAS
ADIECIT


AUGUSTUS GUILELMUS A SCHLEGEL,

DR., PROF. P. O., EQUES ORD. AQUILAE RUBRAE CL. III. CUM LEMNISCO, COMMENDATOR ORD. GUELPH., EQUES ORDD. SCTI VALADIM. ET VASAE LEGIONISQUE HONOR., SOC. O. ACAD. SCIENTT. BORUSS., SOC. HONOR. ACAD. PETROPOL. MONAC. ET BEROL. ARTIUM ELEG. SOCIET. SCIENTT. GOTTING., SOCIETT. ASIAT. CALCUTT. PARIS. LONDIN. SOCIETT. BOMBAIENS. ET BRITANN. LITT. HAFNIENS. ANTIQUIT. SEPTENTR. INDAGANDIS.


VOLUMINIS SECUNDI PARS PRIOR.

---


BONNAE AD RHENUM

TYPIS REGIIS

SUMTIBUS EDITORIS.

MDCCCXXXVIII.

अथ

रामायणे वाल्मीकीये

अयोध्याकाण्डे

एकविंशप्रभृतयः सर्गाः ॥

---

# RAMEIDOS

LIBER SECUNDUS CONTINUATUS

## LIBER SECUNDUS.

### CAPUT XXI.

### CAUSALYAE PLACATIO.

---

तथा तु विलपन्तीं तां कौशल्यां राममातरं ।
उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १ ॥
न रोचते ममाप्येतदार्ये यद्राघवो वनं ।
त्यक्त्वा राज्यश्रियं गछेत् स्त्रिया वाक्यवशं गतः ॥ २ ॥
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः ।
नृपः किमिव न ब्रूयाच्चोद्यमानः समन्ततः ॥ ३ ॥
नास्यापराधं पश्यामि नापि दोषं तथाविधं ।
येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥
न तं पश्याम्यहं लोके परोक्षमपि यो नरः ।
अमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ५ ॥

देवकल्पमृजुं दान्तं रिपूणामपि वत्सलं ।
अवेक्षमाणः को धर्मं त्यजेत् पुत्रमकारणात् ॥ ६ ॥
तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७ ॥
यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्द्धमात्मस्थं कुरु शासनं ॥ ८ ॥
मया पार्श्वे सधनुषा तव गुप्तस्य राघव ।
कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९ ॥
निर्मनुष्यामिमां सर्वामयोध्यां मनुपर्षभ ।
करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १० ॥
भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति ।
सर्वांस्तांश्च वधिष्यामि मृदुर्हि परिभूयते ॥ ११ ॥
प्रोत्साहितोऽयं कैकेय्या स दुष्टो यदि नः पिता ।
अमित्रभूतो निःसङ्गं वध्यतां वध्यतामपि ॥ १२ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनं ॥ १३ ॥
बलमेष किमाश्रित्य हेतुं वा पुरुषोत्तम ।
दातुमिच्छति कैकेय्यै राज्यं स्थितमिदं तव ॥ १४ ॥
त्वया चैव मया चैव कृत्वा वैरमनुत्तमं ।
कास्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १५ ॥

अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः ।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १६ ॥
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ।
प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १७ ॥
हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ।
देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १८ ॥
हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसं ।
कृपणं चास्थिरं बाल्ये वृद्धभावेऽवगर्हितं ॥ १९ ॥
एतत् तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौशल्या रुदती शोकलालसा ॥ २० ॥
भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानन्तरं तत् त्वं कुरुष्व यदि रोचते ॥ २१ ॥
न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितं ।
विहाय शोकसंतप्तां गन्तुमर्हसि मामितः ॥ २२ ॥
धर्मज्ञ यदि धर्मिष्ठ धर्मं चरितुमिच्छसि ।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमं ॥ २३ ॥
शुश्रूषुर्जननीं पुत्रः स्वगृहे नियतो वसन् ।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २४ ॥
यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहं ।
त्वां साहमनुजानामि न गन्तव्यमितो वनं ॥ २५ ॥

त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणं ॥ २६ ॥
यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसां ।
अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुं ॥ २७ ॥
ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतं ।
ब्रह्महत्यामिवाधर्मात् समुद्रः सरितां पतिः ॥ २८ ॥
विलपन्तीं तथा दीनां कौशल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितं ॥ २९ ॥
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनं ॥ ३० ॥
ऋषिणा च पितुर्वाक्यं कुर्वता वनचारिणा ।
गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ ३१ ॥
अस्माकं तु कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भिः सागरैर्भूमिं समाप्तः सुमहान् वधः ॥ ३२ ॥
जामदग्न्येन रामेण रेणुका जननी स्वयं ।
कृत्ता परशुनारण्ये पितुर्वचनकारिणा ॥ ३३ ॥
एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतं ।
पितुर्वचनमक्लीवं करिष्यामि पितुर्हितं ॥ ३४ ॥
नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३५ ॥

तदेतत् तु मया कार्यं क्रियते भुवि नान्यथा ।
पितुर्हि वचनं कुर्वन् न कश्चिन्नाम हीयते ॥ ३६ ॥
तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् ।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मतां ॥ ३७ ॥
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमं ।
विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदं ॥ ३८ ॥
मम मातुर्महद्दुःखमतुलं शुभलक्षण ।
अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ३९ ॥
धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितं ।
धर्मसंश्रितमप्येतत् पितुर्वचनमुत्तमं ॥ ४० ॥
संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ४१ ॥
सोऽहं न शक्यामि पुनर्नियोगमतिवर्तितुं ।
पितुर्हि वचनाद्वीर कैकेय्याहं प्रचोदितः ॥ ४२ ॥
तदेतां विसृजानार्यां क्षत्रधर्माश्रितां मतिं ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यतां ॥ ४३ ॥
तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौशल्यां प्राञ्जलिः शिरसानतः ॥ ४४ ॥
अनुमन्यस्व मां देवि गमिष्यन्तमितो वनं ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४५ ॥

तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीं ।
ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवं ॥ ४६ ॥
शोकः संधार्यतां मातर्हृदये साधु मा शुचः ।
वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४७ ॥
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४८ ॥
अम्ब संहृत्य संभारान् दुःखं हृदि निगृह्य च ।
वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यतां ॥ ४९ ॥

एतद्वचस्तस्य निशम्य माता ।
सुधर्म्यमव्यग्रमविक्लवं च ।
मृतेव संज्ञां प्रतिलभ्य देवी ।
समीक्ष्य रामं पुनरित्युवाच ॥ ५० ॥
यथैव ते पुत्र पिता तथाहं ।
गुरुः स्वधर्मेण सुहृत्तया च ।
न त्वानुजानामि न मां विहाय ।
सुदुःखितामर्हसि गन्तुमेवं ॥ ५१ ॥
किं जीवितेनेह विना त्वया मे ।
लोकेन वा किं स्वधयामृतेन ।
श्रेयो मुहूर्तं तव संनिधानं ।
ममैव कृत्स्नादपि जीवलोकात् ॥ ५२ ॥

नरैरिवोल्काभिरपोह्यमानो ।
मक्षागजो ध्वान्तमभिप्रविष्टः ।
भूयः प्रजज्वाल विलापमेतं ।
निशम्य रामः करुणं जनन्याः ॥ ५३ ॥
स मातरं चैव विसंज्ञकल्पां ।
आर्त्तं च सौमित्रिमभिप्रतप्तं ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं ।
यथा स एवार्हति तत्र वक्तुं ॥ ५४ ॥
अहं हि ते लक्ष्मण नित्यमेव ।
जानामि भक्तिं च पराक्रमं च ।
मम त्वभिप्रायमसंनिरीक्ष्य ।
मात्रा सहाभ्यर्दसि मां सुदुःखं ॥ ५५ ॥
धर्मार्थकामाः खलु तात लोके ।
समीक्षिताः कर्मफलोदयेषु ।
ते तत्र सर्वे स्युरसंशयं मे ।
भार्येव वश्याभिमता सपुत्रा ॥ ५६ ॥
यस्मिंस्तु सर्वे स्युरसंनिविष्टा ।
धर्मो यतः स्यात् तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके ।
कामात्मता खल्वपि न प्रशस्ता ॥ ५७ ॥

गुरुश्च राजा च पिता च वृद्धः ।
क्रोधात् प्रहर्षाद्यदि वापि कामात् ।
यद्यादिशेत् कार्यमवेक्ष्य धर्मं ।
कस्तं न कुर्यादनृशंसवृत्तिः ॥ ५८ ॥
न तेन शक्नोमि पितुः प्रतिज्ञां ।
इमामकर्तुं सकलां यथावत् ।
स ह्यावयोस्तात गुरुर्नियोगे ।
देव्याश्च भर्ता स गतिः स धर्मः ॥ ५९ ॥
तस्मिन् पुनर्जीवति धर्मराजे ।
विशेषतः स्वे पथि वर्तमाने ।
देवी मया सार्द्धमितोऽपगच्छेत् ।
कथंस्विदन्या विधवेव नारी ॥ ६० ॥
सा मानुमन्यस्व वनं व्रजन्तं ।
कुरुष्व मे स्वस्त्ययनानि देवि ।
यथा समाप्ते पुनराव्रजेयं ।
यथा हि सत्येन पुनर्ययातिः ॥ ६१ ॥
यशो ह्यहं केवलराज्यकारणान् ।
न पृष्ठतः कर्तुमलं महोदयं ।
अदीर्घकाले न तु देवि जीविते ।
वृणेऽवरामद्य महीमधर्मतः ॥ ६२ ॥

प्रसादयन् नरवृषभः स मातरं ।
परक्रमाज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं ।
चकार तां हृदि जननीं प्रदक्षिणं ॥ ६३ ॥

इत्ययोध्याकाण्डे कौशल्यानुनयो नाम एकविंशः सर्गः
॥ २१ ॥

---

## CAPUT XXII.

### LAXMANI PLACATIO.

अथ तं व्यथया दीनं सविशेषममर्षितं ।
श्वसन्तमिव नागेन्द्रं रोषविस्फारितेक्षणं ॥ १ ॥
आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियं ।
उवाचेदं स धैर्येण धारयन् सत्त्वमात्मवान् ॥ २ ॥
निगृह्य रोषं शोकं च धैर्यमाक्रम्य केवलं ।
अवमानं निरस्यैनं गृहीत्वा हर्षमुत्तमं ॥ ३ ॥
उपक्लृप्तं यदेतन्मे अभिषेकार्थमुत्तमं ।
सर्वं निवर्तय क्षिप्रं कुरु कार्यं निरत्ययं ॥ ४ ॥

सौमित्रे यो ऽभिषेकार्थे मम संभारसंभ्रमः ।
अभिषेकनिवृत्त्यर्थे सो ऽस्तु संभारसंभ्रमः ॥ ५ ॥
यस्या मदभिषेकार्थे मानसं परितप्यते ।
माता नः सा यथा न स्यात् सविशङ्का तथा कुरु ॥ ६ ॥
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे ।
मनसि प्रतिसंजातं सौमित्रे ऽहमुदीक्षितुं ॥ ७ ॥
न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन ।
मातॄणां वा पितुर्वाहं कृतमल्पं च विप्रियं ॥ ८ ॥
सत्यः सत्याभिसंधश्च नित्यं सत्यपराक्रमः ।
परलोकभयाद्भीतो निर्भयो ऽस्तु पिता मम ॥ ९ ॥
तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते ।
सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च मां ॥ १० ॥
अभिषेकविधानं तु तस्मात् संहृत्य लक्ष्मण ।
अन्वगेवाहमिच्छामि वनं गन्तुमितः पुरः ॥ ११ ॥
मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्रमभिषेचयतां ततः ॥ १२ ॥
मयि चीराजिनधरे जटामण्डलधारिणि ।
गते ऽरण्यं च कैकेय्या भविष्यति मनःसुखं ॥ १३ ॥
बुद्धिः प्रणिहिता येन मनश्चानुसमाहितं ।
तं तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि मा चिरं ॥ १४ ॥

कृतान्त एव सौमित्रे द्रष्टव्यो मद्विवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्त्तने ॥ १५ ॥
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने ।
यदि तस्या न भावोऽयं कृतान्तविहितो भवेत् ॥ १६ ॥
जानासि हि यथा सौम्य न मातृषु ममान्तरं ।
भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७ ॥
सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ।
उग्रैर्वाक्यैरहं तस्या नान्यं दैवात् समर्थये ॥ १८ ॥
कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा ।
ब्रूयात् सुप्राकृतेव स्त्री मत्पीडां राजसंनिधौ ॥ १९ ॥
यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते ।
व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ २० ॥
कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् ।
यस्य न ग्रहणं किंचित् कर्मणोऽन्यत्र दृश्यते ॥ २१ ॥
सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्च किंचित् तथाभूतं ननु दैवस्य कर्म तत् ॥ २२ ॥
ऋषयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः ।
उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः ॥ २३ ॥
असंकल्पितमेवेह यदकस्मात् प्रवर्तते ।
निवर्त्यारम्भमारब्धं ननु दैवस्य कर्म तत् ॥ २४ ॥

एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना ।
व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५ ॥
तस्मादपरितापः सन् त्वमप्यनुविधाय मां ।
प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियां ॥ २६ ॥
एभिरेव घटैः सर्वैरभिषेचनसंभृतैः ।
मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ॥ २७ ॥
अथवा किं ममैतेन राज्यद्रव्यमयेण तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥ २८ ॥
मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये ।
राज्यं वा वनवासो वा वनवासो महोदयः ॥ २९ ॥
न लक्ष्मणास्मिन् मम राज्यविघ्ने ।
माता यवीयस्यतिशङ्कितव्या ।
दैवाभिपन्ना न पिता कथंचिज्- ।
ज्ञानासि दैवं हि तथाप्रभावं ॥ ३० ॥

इत्ययोध्याकाण्डे लक्ष्मणानुनयो नाम द्वाविंशः सर्गः
॥ २२ ॥

## CAPUT XXIII.

### LAXMANI IRA.

इति ब्रुवति रामे तु लक्ष्मणोऽवाक्शिरास्तदा ।
ध्यात्वा मध्यं जगामेव मनसा दैन्यहर्षयोः ॥ १ ॥
तदा तु बद्ध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः ।
निःशश्वास महासर्पो विलस्थ इव रोषितः ॥ २ ॥
तस्य दुष्प्रतिवीक्ष्यं तद्भ्रुकुटीसहितं तदा ।
बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखं ॥ ३ ॥
अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः ।
तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधरां ॥ ४ ॥
खड्गं परिमृषन् रोषाच्छत्रुमर्मविदारणं ।
अग्राक्ष्णा वीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् ॥ ५ ॥
अस्थाने संभ्रमो यस्य जातो वै सुमहानयं ।
धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ॥ ६ ॥
कथं ह्येतदसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ।
यथाह्येवमशौण्डीरं शौण्डीरः क्षत्रियर्षभः ॥ ७ ॥
किं नाम कृपणं दैवमशक्तमभिशंससि ।
पापयोस्ते कथं नाम तयोः शङ्का न विद्यते ॥ ८ ॥

सन्ति धर्मोपधाः श्लक्ष्णा धर्मात्मन् किं न बुध्यसे ।
तयोः सुचरितं स्वार्थं शाठ्यात् परिजिहीर्षतोः ॥ ९ ॥
यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव ।
तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ॥ १० ॥
लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनं ।
नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि ॥ ११ ॥
येनैवमागता द्वैधं तव बुद्धिर्महामते ।
सो ऽपि धर्मो मम द्वेष्यो यत्प्रसङ्गाद्विमुह्यसि ॥ १२ ॥
कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः ।
करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितं ॥ १३ ॥
यदयं किल्बिषाद्भेदः कृतो ऽप्येवं न गृह्यते ।
जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः ॥ १४ ॥
मनसापि कथं कामं कुर्यास्त्वं कामवृत्तयोः ।
तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ॥ १५ ॥
यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मता ।
तथाप्युपेक्षणीयं ते न मे तदपि रोचते ॥ १६ ॥
विक्लवो वीर्यहीनो यः स दैवमनुवर्तते ।
वीराः संभावितात्मानो न दैवं पर्युपासते ॥ १७ ॥
दैवं पुरुषकारेण यः समर्थः प्रबाधितुं ।
न दैवेन विपन्नार्थः पुरुषः सो ऽवसीदति ॥ १८ ॥

द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च
दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥ १९ ॥
अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः ।
यैर्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनं ॥ २० ॥
अत्यंकुशमिवोद्दामं गजं मदजलोद्धतं ।
प्रधावितमहं दैवं पौरुषेण निवर्तये ॥ २१ ॥
लोकपालाः समस्तास्ते नाद्य रामाभिषेचनं ।
न च कृत्स्नास्त्रयो लोका विहन्युः किंपुनः पिता ॥ २२ ॥
यैर्विवासस्तवारण्ये मिथो राजन् समर्थितः ।
अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा ॥ २३ ॥
अहं तदाशां धक्ष्यामि पितुस्तस्याश्च या तव ।
अभिषेकविघातेन पुत्रराज्याय वर्तते ॥ २४ ॥
मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा ।
प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ॥ २५ ॥
ऊर्द्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरं ।
आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ॥ २६ ॥
पूर्वराजर्षिवृत्त्या हि वनवासो विधीयते ।
प्रजा निक्षिप्य पुत्रेषु पुत्रवत् परिपालने ॥ २७ ॥
स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया ।
नैवमिच्छसि धर्मात्मन् राज्यं राम त्वमात्मनि ॥ २८ ॥

प्रतिज्ञाने च ते वीर मा भूवं वीरलोकभाक् ।
राज्यं च तव रक्षेयमहं वेलेव सागरं ॥ २९ ॥
मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव ।
अहमेको महीपालानलं वारयितुं बलात् ॥ ३० ॥
न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे
नासिराबन्धनार्थाय न शराः स्तम्भहेतवः ॥ ३१ ॥
अमित्रमथनार्थाय सर्वमेतच्चतुष्टयं ।
न चाहं कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम ॥ ३२ ॥
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ।
प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये ॥ ३३ ॥
खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे ।
हस्त्यश्वरथिहस्तोरुशिरोभिर्भविता मही ॥ ३४ ॥
खड्गधाराहता मेऽद्य दीप्यमाना इवाद्रयः ।
पतिष्यन्ति द्विपा भूमौ मेघा इव सविद्युतः ॥ ३५ ॥
बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने ।
कथं पुरुषकारः स्यात् पुरुषाणां मयि स्थिते ॥ ३६ ॥
बहुभिश्चैकमत्यस्यन्नेकेन च बहून् जनान् ।
विनियोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु ॥ ३७ ॥
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति ।
राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं च तव प्रभो ॥ ३८ ॥

अस्य चन्दनसारस्य केयूरामोक्षणस्य च ।
वसूनां च विमोक्षस्य सुहृदां पूजनस्य च ॥ ३९ ॥
अनुरूपाविमौ बाहू राम कर्म करिष्यतः ।
अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे ॥ ४० ॥
ब्रवीहि कोऽद्यैव मया वियुज्यतां ।
तवासुहृत् प्राणयशःसुहृज्जनैः ।
यथा तवेयं वसुधा वशे भवेत् ।
तथैव मां शाधि तवास्मि किंकरः ॥ ४१ ॥
विमृज्य बाष्पं परिसान्त्व्य चासकृत् ।
स लक्ष्मणं राघववंशवर्धनः ।
उवाच पित्र्ये वचने व्यवस्थितं ।
निबोध मामेष हि सौम्य सत्पथः ॥ ४२ ॥

इत्ययोध्याकाण्डे लक्ष्मणसंरम्भो नाम त्रयोविंशः सर्गः
॥ २३ ॥

---

## CAPUT XXIV.

### Causalyae consolatio.

तं समीक्ष्य व्यवसितं पितुर्निर्देशपालने ।
कौशल्या वाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥
अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ।
मयि जातो दशरथात् कथमुञ्छेन वर्तयेत् ॥ २ ॥
यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते ।
कथं स भोक्ष्यते रामो वने मूलफलान्ययं ॥ ३ ॥
कः श्रद्दध्यादिदं श्रुत्वा कस्य वा न भवेद्भयं ।
गुणवान् दयितो राज्ञा राघवो यद्विवास्यते ॥ ४ ॥
नूनं तु बलवाँल्लोके कृतान्तः सर्वमादिशन् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥
अयं हि मामात्मभवस्तवादर्शनमारुतः ।
विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥
चिन्तावाष्पमहाधूमस्तवादर्शनचित्तजः ।
कर्षयित्वा भृशं पुत्र निःश्वासायाससंभवः ॥ ७ ॥
त्वया विहीनामिह मां शोकाग्निरतुलो महान् ।
प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८ ॥
यथा हि धेनुः स्वं वत्सं गच्छन्तमनुगच्छति ।
अहं त्वानुगमिष्यामि यत्र वत्स गमिष्यसि ॥ ९ ॥

तथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः ।
श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १० ॥
कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते ।
भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥ ११ ॥
भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियाः ।
स भवत्या न कर्तव्यो मनसापि विगर्हितः ॥ १२ ॥
यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ १३ ॥
मया चैव भवत्या च कर्तव्यं वचनं पितुः ।
राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १४ ॥
इमानि तु महारण्ये विहृत्य नव पञ्च च ।
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥ १५ ॥
एवमुक्ता प्रियं पुत्रं बाष्पपूर्णानना तदा ।
उवाच परमार्त्ता तु कौशल्या सुतवत्सला ॥ १६ ॥
आसां राम सपत्नीनां वस्तुं मध्ये न मे क्षमं ।
नय मामपि काकुत्स्थ वनं वन्यां मृगीमिव ॥ १७ ॥
तां तथा रुदतीं रामोऽरुदन् वचनमब्रवीत् ।
जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च ॥ १८ ॥
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ।
न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ॥ १९ ॥

भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ।
भवतीमनुवर्त्तेत स हि धर्मरतः सदा ॥ २० ॥
यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ।
श्रमं नावाप्नुयात् किंचिदप्रमत्ता तथा कुरु ॥ २१ ॥
दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ।
राज्ञो वृद्धस्य सततं हितं चर समाहिता ॥ २२ ॥
व्रतोपवासनिरता या नारी परमोत्तमा ।
भर्त्तारं नानुवर्त्तेत सा च पापगतिर्भवेत् ॥ २३ ॥
भर्त्तुः शुश्रूषया नारी लभते गतिमुत्तमां ।
अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ॥ २४ ॥
शुश्रूषामेव कुर्वीत भर्त्तुः प्रियहिते रता ।
एष धर्मः पुरा दृष्टो वेदे लोके श्रुतः स्मृतः ॥ २५ ॥
अग्निकार्येषु च सदा सुमनोभिश्च देवताः ।
पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः ॥ २६ ॥
एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ।
नियता नियताहारा भर्त्तृशुश्रूषणे रता ॥ २७ ॥
प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ।
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितं ॥ २८ ॥
एवमुक्ता तु रामेण बाष्पपूर्णायतेक्षणा ।
कौशल्या पुत्रशोकार्त्ता रामं वचनमब्रवीत् ॥ २९ ॥

गमने तु कृतां बुद्धिं न ते शक्नोमि राघव ।
विनिवर्तयितुं वीर नूनं कालो दुरत्ययः ॥ ३० ॥
गच्छ पुत्र त्वमेकाग्रो भद्रं ते ऽस्तु सदा विभो ।
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ॥ ३१ ॥
प्रत्यागते महाभागे कृतार्थे चरितव्रते ।
पितुरानृण्यतां प्राप्ते त्वयि लप्स्ये परं सुखं ॥ ३२ ॥
कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि ।
यत् त्वां संचोदयति मे वच आच्छिद्य राघव ॥ ३३ ॥
गच्छेदानीं महाबाहो क्षेमेण पुनरागतः ।
नन्दयिष्यसि मां पुत्र साम्ना श्लक्ष्णेन चारुणा ॥ ३४ ॥
अपीदानीं स कालः स्याद्वनात् प्रत्यागतं पुनः ।
येन त्वां पुत्र पश्येयं जटावल्कलधारिणं ॥ ३५ ॥
तथा हि रामं वनवासनिश्चितं ।
समीक्ष्य देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो ।
बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥ ३६ ॥

इत्ययोध्याकाण्डे कौशल्याश्वासनं नाम चतुर्विंशः सर्गः
॥ २४ ॥

---

## CAPUT XXV.

### VOTA SOLENNIA NUNCUPATA.

सापनीय तमायासमुपस्पृश्य जलं शुचि ।
चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १ ॥
न शक्यसे वारयितुं गच्छेदानीं रघूत्तम ।
शीघ्रं च विनिवर्तस्व वर्तस्व च सतां क्रमे ॥ २ ॥
यं पालयसि धर्मं त्वं धृत्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥ ३ ॥
येभ्यः प्रणमसे पुत्र चैत्येष्वायतनेषु च ।
ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।
तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥ ५ ॥
पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा ।
सत्येन च महाबाहो चिरं जीवाभिरक्षितः ॥ ६ ॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि च विप्राणां शैला वृक्षा ह्रदाः क्षुपाः ॥ ७ ॥

स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ।
लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ॥ ८ ॥
ऋतवः षट् च पक्षाश्च मासाः संवत्सराः क्षपाः ।
दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ॥ ९ ॥
स्कन्दश्च भगवान् देवः सोमश्च सबृहस्पतिः ।
सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ १० ॥
शैलाः सर्वे समुद्राश्च राजा वरुण एव च ।
द्यौरन्तरिक्षं पृथिवी वायुश्च सचराचरः ॥ ११ ॥
नक्षत्राणि च सर्वाणि ग्रहाश्च सह दैवतैः ।
ज्योतींषि चैव दिव्यानि पान्तु त्वां पुत्र सर्वशः ॥ १२ ॥
अहोरात्रे तथा संध्ये पान्तु त्वां वनमाश्रितं ।
क्षणाः कलाश्च काष्ठाश्च तव शर्म दिशन्तु ते ॥ १३ ॥
महावने विचरतो मुनिवेशस्य धीमतः ।
तथादित्याश्च दैत्याश्च भवन्तु सुखदाः सदा ॥ १४ ॥
राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणां ।
क्रव्यादानां च सर्वेषां मा भूत् पुत्रक ते भयं ॥ १५ ॥
प्लवगा वृश्चिका दंशा मसकाश्चैव कानने ।
सरीसृपाश्च कीटाश्च मा भूवन् गहने तव ॥ १६ ॥
महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ।
महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ॥ १७ ॥

नृमांसभोजना रौद्रा ये चान्ये सत्त्वजातयः ।
मास्म त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह ॥ १८ ॥
आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः ।
सर्वसंपत्तये राम स्वस्तिमान् गछ पुत्रक ॥ १९ ॥
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ।
सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥ २० ॥
शुक्रः सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ।
पान्तु त्वामर्चिता राम दण्डकारण्यवासिनं ॥ २१ ॥
अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखाच्च्युताः ।
उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ॥ २२ ॥
सर्वलोकप्रभुर्ब्रह्मा भूतकर्ता तथर्षयः ।
ये च शेषाः सुरास्ते त्वां रक्षन्तु वनवासिनं ॥ २३ ॥
इति माल्यैः सुरगणान् गन्धैश्चापि यशस्विनी ।
स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ॥ २४ ॥
ज्वलनं समुपादाय ब्राह्मणेन महात्मना ।
हावयामास विधिना राममङ्गलकारणात् ॥ २५ ॥
घृतं श्वेतानि माल्यानि समिधश्चैव सर्षपान् ।
उपसंपादयामास कौशल्या परमाङ्गना ॥ २६ ॥
उपाध्यायः स विधिना हुत्वा शान्तिमनामयं ।
हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥ २७ ॥

मधुदध्यक्षतघृतैः स्वस्तिवाच्यद्विजांस्ततः ।
वाचयामास रामस्य वने स्वस्त्ययनक्रियां ॥ २८ ॥
ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ।
दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥ २९ ॥
यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत् तत् ते भवतु मङ्गलं ॥ ३० ॥
यन्मङ्गलं सुपर्णस्य विनताकल्पयत् पुरा ।
अमृतं प्रार्थयानस्य तत् ते भवतु मङ्गलं ॥ ३१ ॥
अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात् तत् ते भवतु मङ्गलं ॥ ३२ ॥
त्रिविक्रमान् विक्रमतो विष्णोरतुलतेजसः ।
यदासीन्मङ्गलं राम तत् ते भवतु मङ्गलं ॥ ३३ ॥
ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु शुभमङ्गल ॥ ३४ ॥
इति पुत्रस्य शेषाश्च कृत्वा शिरसि भामिनी ।
गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३५ ॥
ओषधीं चापि सिद्धार्थां विशल्यकरणीं तथा ।
चकार रक्षां कौशल्या मन्त्रैरभिजजाप च ॥ ३६ ॥
उवाचापि प्रहृष्टेव सा दुःखवशवर्तिनी ।
वाङ्मात्रेण न भावेन वाचा संसज्जमानया ॥ ३७ ॥

आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी ।
अवदत् पुत्रमिष्टार्थो गच्छ राम यथासुखं ॥ ३८ ॥
अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतं ।
द्रक्ष्यामि त्वां सुखं वत्स सुस्थितं राजवर्त्मनि ॥ ३९ ॥
प्रणष्टदुःखसंकल्पा हर्षविद्योतितानना ।
द्रक्ष्यामि त्वां वनात् प्राप्तं पूर्णचन्द्रमिवोदितं ॥ ४० ॥
भद्रासनगतं राम वनवासादिहागतं ।
द्रक्ष्यामि त्वां मुक्तः पुत्र तीर्णवन्तं पितुः वचः ॥ ४१ ॥
मङ्गलैरुपसंपन्नो वनवासादिहागतः ।
मम वध्वाश्च नित्यं त्वं कामान् संवर्धय प्रभो ॥ ४२ ॥
मयार्चिता देवगणाः शिवादयो ।
महर्षयो भूतगणाः सुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते ।
हितानि काङ्क्षन्तु दिशश्च राघव ॥ ४३ ॥
इत्येवमश्रुप्रतिपूर्णलोचना ।
समाप्य सा स्वस्त्ययनं यथाविधि ।
प्रदक्षिणं चापि चकार राघवं ।
पुनः पुनश्चापि निरीक्ष्य सस्वजे ॥ ४४ ॥
तथा हि देव्या च कृतप्रदक्षिणो ।
निपीड्य मातुश्चरणौ पुनः पुनः ।

जगाम सीतानिलयं महायशाः ।
स राघवः प्रज्वलितस्तया श्रिया ॥ ४५ ॥

इत्ययोध्याकाण्डे स्वस्त्ययनक्रिया नाम पञ्चविंशः सर्गः
॥ २५ ॥

---

## CAPUT XXVI.

### Secretum colloquium cum Sita.

अभिवाद्य तु कौशल्यां रामः संप्रस्थितो वनं ।
कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥
विराजयन् राजसुतो राजमार्गं नरैर्वृतं ।
हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २ ॥
वैदेही चापि तत् सर्वं न शुश्राव तपस्विनी ।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनं ॥ ३ ॥
देवकार्यं च सा कृत्वा कृतज्ञा हृष्टचेतना ।
अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते ॥ ४ ॥
प्रविवेशाथ रामस्तु स्ववेश्म सुविभूषितं ।
प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ॥ ५ ॥

अथ सीता समुत्पत्य वेपमाना च तं पतिं ।
अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियं ॥ ६ ॥
तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतं ।
तं शोकं राघवः सोढुं ततो विवृततां गतः ॥ ७ ॥
विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणं ।
आह दुःखाभिसंतप्ता किमिदानीमिदं प्रभो ॥ ८ ॥
अद्य बार्हस्पतः श्रीमान् युक्तः पुष्योऽनु राघव ।
प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥
न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं वल्गु छत्रेणाभिविराजते ॥ १० ॥
व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणं ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननं ॥ ११ ॥
वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ ।
स्तुवन्तो नाद्य दृश्यन्ते मङ्गलैः सूतमागधाः ॥ १२ ॥
न ते क्षौद्रं च दधि च ब्राह्मणाः वेदपारगाः ।
मूर्ध्नि मूर्धाभिषिक्तस्य ददति स्म विधानतः ॥ १३ ॥
न त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः ।
अनुव्रजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४ ॥
चतुर्भिर्वेगसंपन्नैर्हयैः काञ्चनभूषितः ।
मुख्यः पुष्परथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥

न हस्ती चाग्रतः श्रीमान् सर्वलक्षणपूजितः ।
प्रयाणे लक्ष्यते वीर कृष्णमेघगिरिप्रभः ॥ १६ ॥
न च काञ्चनचित्रं ते पश्यामि प्रियदर्शनं ।
भद्रासनं पुरस्कृत्य यान्तं वीर पुरःसरं ॥ १७ ॥
अभिषेको यदा सज्जः किमिदानीमिदं तव ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
सीते तत्र भवांस्तातः प्रव्राजयति मां वनं ॥ १९ ॥
कुले महति संभूते धर्मज्ञे धर्मचारिणि ।
शृणु जानकि येनेदं क्रमेणाभ्यागतं मम ॥ २० ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै ।
कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१ ॥
तयाद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते ।
प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३ ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनं ।
भरतस्य समीपे ते नाहं कथ्यः कथंचन ॥ २४ ॥
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवं ।
अनुकूलतया शक्यं समीपे तस्य वर्तितुं ॥ २५ ॥

तस्मै दत्तं नृपतिना यौवराज्यं सनातनं ।
स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २६ ॥
अहं चापि प्रतिज्ञां तां गुरोः समनुपालयन् ।
वनमद्यैव यास्यामि स्थिरीभव मनस्विनि ॥ २७ ॥
याते च मयि कल्याणि वनं मुनिनिषेवितं ।
व्रतोपवासपरया भवितव्यं त्वयानघे ॥ २८ ॥
कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।
वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ २९ ॥
माता च मम कौशल्या वृद्धा संतापकर्शिता ।
धर्म्ममेवाग्रतः कृत्वा त्वत्तः संमानमर्हति ॥ ३० ॥
वन्दितव्याश्च ते नित्यं याः शेषाः मम मातरः ।
स्नेहप्रणयसंभोगैः समा हि मम मातरः ॥ ३१ ॥
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ।
उभौ भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३२ ॥
विप्रियं च न कर्तव्यं भरतस्य कदाचन ।
स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३३ ॥
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः ।
राजानः संप्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३४ ॥
* स्पृशन्निव गजो हन्ति जिघ्रन्निव भुजंगमः ।
* स्मयन्निव नृपो हन्ति मानयन्निव दुर्जनः ॥ ३५ ॥

औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः ।
समर्थान् प्रतिगृह्णन्ति परानपि नराधिपाः ॥ ३६ ॥
सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी ।
भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥
अहं गमिष्यामि महावनं प्रिये ।
त्वया हि वस्तव्यमिहैव भामिनि ।
यथा व्यलीकं कुरुषे न कस्यचित् ।
तथा त्वया कार्यमिदं वचो मम ॥ ३८ ॥

इत्ययोध्याकाण्डे सीतोपमन्त्रणं नाम षड्विंशः सर्गः
॥ २६ ॥

---

## CAPUT XXVII.

### SITAE SERMO.

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥
किमिदं भाषसे राम वाक्यं लघुतया ध्रुवं ।
त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ॥ २ ॥

वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप ।
अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितं ॥ ३ ॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥ ४ ॥
भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥
न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ ६ ॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ७ ॥
ईर्ष्यारोषौ बहिष्कृत्य पीतशेषमिवोदकं ।
नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥ ८ ॥
प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ।
सर्वावस्थागता भर्तुः पादछाया विशिष्यते ॥ ९ ॥
अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयं ।
नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥ १० ॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितं ।
नानामृगगणाकीर्णं शार्दूलगणसेवितं ॥ ११ ॥
सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतं ॥ १२ ॥

शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥ १३ ॥
त्वं हि कर्तुं वने शक्तो राम संपरिपालनं ।
अन्यस्यापि जनस्येह किंपुनर्मम मानद ॥ १४ ॥
साहं त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग निवर्तयितुमुद्यता ॥ १५ ॥
फलमूलाशना नित्यं भविष्यामि न संशयः ।
न ते दुःखं करिष्यामि निवसन्ती त्वया सह ॥ १६ ॥
इच्छामि सरितः शैलान् पल्वलानि सरांसि च ।
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥ १७ ॥
हंसकारण्डवाकीर्णाः पद्मिनीर्विमलोदकाः ।
अवगाह्याभिरंस्येऽहं त्वयैव सह राघव ॥ १८ ॥
सहस्राण्यपि वर्षाणां बहूनि सहिता त्वया ।
समतीतानि मन्येऽहं यथैकं दिवसं तथा ॥ १९ ॥
स्वर्गेऽपि वासं रहिता त्वया वीर न कामये ।
त्वया मम विहीनायाः कुतः स्वर्गः कुतः सुखं ॥ २० ॥
अहं गमिष्यामि वनं सुदुर्गमं ।
न मां तु वीर प्रतिषेद्धुमर्हसि ।
वने निवत्स्यामि यथा पितुर्गृहे ।
तवैव पादावुपगृह्य संमता ॥ २१ ॥

अनन्यभावामनुरक्तचेतसं ।
त्वया वियुक्तां मरणाय निश्चितां ।
नयस्व मां साधु कुरुष्व याचनां ।
न ते मयातो गुरुता भविष्यति ॥ २२ ॥
तथा ब्रुवाणामपि धर्मवत्सलां ।
न च स्म सीतां नृवरो निनीषति ।
उवाच चैनां बहु संनिवर्तने ।
वने निवासस्य च दुःखतां प्रति ॥ २३ ॥

इत्ययोध्याकाण्डे सीतावाक्यं नाम सप्तविंशः सर्गः
॥ २७ ॥

---

## CAPUT XXVIII.

### INCOMMODA SILVARUM EXPOSITA.

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥
सान्त्वयित्वा ततस्तां तु बाष्पदूषितलोचनां ।
निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥

सीते महाकुलीनासि धर्मे च निरता सदा ।
इहाचर स्वधर्मं त्वं मा यथा मनसः सुखं ॥ ३ ॥
सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाबले ।
वने दोषा हि बहवो वदतस्तान् निबोध मे ॥ ४ ॥
हितबुद्ध्या खलु वचो मयैतदभिधीयते ।
सीते विमुच्यतामेषा वनवासकृता मतिः ॥ ५ ॥
बहुदोषं हि कान्तारं वनमित्यभिधीयते ।
सदा सुखं न जानामि दुःखमेव सदा वनं ॥ ६ ॥
गिरिनिर्झरसंभूता गिरिनिर्दरवासिनां ।
सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनं ॥ ७ ॥
क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये महामृगाः ।
दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनं ॥ ८ ॥
सग्राहाः सरितश्चैव पङ्कवत्यः सुदुस्तराः ।
मत्तैरपि गजैर्नित्यमतो दुःखतरं वनं ॥ ९ ॥
लताकण्टकसंकीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सुदुःखाश्च मार्गा दुःखमतो वनं ॥ १० ॥
सुप्यते पर्णशय्यासु स्वयंभग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनं ॥ ११ ॥
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते दुःखमतो वनं ॥ १२ ॥

उपवासश्च कर्तव्यो यथा प्राणेन मैथिलि ।
जटाभारश्च कर्तव्यो वल्कलाम्बरधारिणा ॥ १३ ॥
देवतानां पितॄणां च कर्तव्यं विधिपूर्वकं ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनं ॥ १४ ॥
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद्दुःखतरं वनं ॥ १५ ॥
उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां सीते दुःखमतो वनं ॥ १६ ॥
यथालब्धेन कर्तव्यः संतोषस्तेन मैथिलि ।
यताहारैर्वनचरैः सीते दुःखमतो वनं ॥ १७ ॥
अतीव वातास्तिमिरं बुभुक्षा चास्ति नित्यशः ।
भयानि च महान्त्यत्र ततो दुःखतरं वनं ॥ १८ ॥
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ।
चरन्ति पृथिवीं दर्पात् ततो दुःखतरं वनं ॥ १९ ॥
नदीनिलयनाः सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनं ॥ २० ॥
पतंगा वृश्चिकाः कीटा दंशाश्च मशकैः सह ।
बाधन्ते नित्यमबले सर्वं दुःखमतो वनं ॥ २१ ॥
द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि ।
वने व्याकुलशाखाग्रास्तेन दुःखतरं वनं ॥ २२ ॥

कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दुःखमेव सदा वनं ॥ २३ ॥
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये दुःखं नित्यमतो वनं ॥ २४ ॥
तदलं ते वनं गत्वा क्षमं न हि वनं तव ।
विमृशन्निह पश्यामि बहुदोषकरं वनं ॥ २५ ॥

इत्ययोध्याकाण्डे वनदोषदर्शनं नाम अष्टाविंशः सर्गः
॥ २८ ॥

---

CAPUT XXIX.

RAMAE PLACATIO.

एतत् तु वचनं श्रुत्वा सीता रामस्य दुःखिता ।
प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥
ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति ।
गुणानित्येव तान् विद्धि तव स्नेहपुरस्कृतान् ॥ २ ॥
मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा ।
चमराः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥
अदृष्टपूर्वरूपत्वात् सर्वे ते तव राघव ।
रूपं दृष्ट्वापसर्पेयुस्तव सर्वे हि बिभ्यति ॥ ४ ॥

त्वया सह च गन्तव्यं मया गुरुजनाज्ञया ।
त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितं ॥ ५ ॥
न हि मां त्वत्समीपस्थामतिशक्तोऽपि राघव ।
सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥
पतिहीना तु या नारी सा न शक्ष्यति जीवितुं ।
काममेवंविधं राम त्वया मम विदर्शितं ॥ ७ ॥
अथापि च महाप्राज्ञ ब्राह्मणानां मया श्रुतं ।
पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥ ८ ॥
लाक्षणिकेभ्यो द्विजातिभ्यः श्रुत्वाहं वचनं गृहे ।
वनवासकृतोत्साहा नित्यमेव महाबल ॥ ९ ॥
आदेशो वनवासस्य प्राप्तव्यः स मया किल ।
सा त्वया सह तत्राहं यास्यामि प्रिय नान्यथा ॥ १० ॥
कृतादेशा भविष्यामि गमिष्यामि सह त्वया ।
कालश्चायं समुत्पन्नः सत्यवाग्भवतु द्विजः ॥ ११ ॥
वनवासे हि जानामि दुःखानि बहुधा किल ।
प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२ ॥
कन्यया च पितुर्गेहे वनवासः श्रुतो मया ।
भिक्षिण्याः साधुवृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥
प्रसादितश्च वै पूर्वं त्वं वै बहुविधं प्रभो ।
गमनं वनवासाय काङ्क्षितं हि सह त्वया ॥ १४ ॥

कृतलक्षणाहं भद्रं ते गमनं प्रति राघव ।
वनवासस्य शूरस्य मम चर्या हि रोचते ॥ १५ ॥
शुद्धात्मन् प्रेमभावाद्धि भविष्यामि विकल्मषा ।
भर्तारमनुगच्छन्ती भर्ता हि मम दैवतं ॥ १६ ॥
प्रेत्यभावे हि कल्याणः संगमो मे सह त्वया ।
श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनां ॥ १७ ॥
इह लोके च पितृभिर्या स्त्री यस्य महाबल ।
अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १८ ॥
एवमस्मात् स्वकां नारीं सुवृत्तां हि पतिव्रतां ।
नाभिरोचयसे नेतुं त्वं मां केनेव हेतुना ॥ १९ ॥
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि ।
विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ २० ॥
एवं बहुविधं तं सा याचते गमनं प्रति ।
नानुमेने महाबाहुस्तां नेतुं विजनं वनं ॥ २१ ॥
एवमुक्ता तु सा चिन्तां मैथिली समुपागता ।
स्नपयन्ती कुचावुष्णैरश्रुभिर्नयनच्युतैः ॥ २२ ॥

इत्ययोध्याकाण्डे रामानुनयो नाम एकोनत्रिंशः सर्गः
॥ २९ ॥

## CAPUT XXX.

### SITAE DATA VENIA PROFICISCENDI.

शान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ।
वनवासनिमित्ताय भर्तारमिदमब्रवीत् ॥ १ ॥
सा तमुत्तमसंविग्ना सीता विपुलवक्षसं ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवं ॥ २ ॥
किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः ।
रामं जामातरं प्राप्य स्त्रियं पुरुषविग्रहं ॥ ३ ॥
अनृतं बत लोकोऽयमज्ञानाद्यदि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥
किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ।
यत् परित्यक्तुकामस्त्वं मामनन्यपरायणां ॥ ५ ॥
द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रतां ।
सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीं ॥ ६ ॥
न त्वहं मनसाप्यन्यं द्रष्टास्मि त्वदृतेऽनघ ।
त्वया राघव गच्छेयं यथान्या कुलपांसनी ॥ ७ ॥
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीं ।
शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥ ८ ॥

यस्य पथ्यं च रामात्थ यस्य चार्थेऽवरुध्यसे ।
त्वं तस्य भव वश्यश्च विधेयश्च सदानघ ॥ ९ ॥
स मामनादाय वनं न त्वं प्रस्थातुमर्हसि ।
तपो वा यदि वा राज्यं स्वर्गो वा स्यात् त्वया सह ॥ १० ॥
न च मे भविता तत्र कश्चित् पथि परिश्रमः ।
पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११ ॥
कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ।
तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥
महावातसमुद्भूतं यन्मामवकरिष्यति ।
रजो रमण तन्मन्ये परार्ध्यमिव चन्दनं ॥ १३ ॥
शाद्वलेषु यदासिष्ये वनान्ते वनगोचरा ।
कुथास्तरणतल्पेषु किं स्यात् सुखतरं ततः ॥ १४ ॥
पत्रं मूलं फलं यत् तु अल्पं वा यदि वा बहु ।
दास्यसे स्वयमाहृत्य तन्मेऽमृतरसोपमं ॥ १५ ॥
न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः ।
आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥
न च तत्र ततः किंचिद्द्रष्टुमर्हसि विप्रियं ।
मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७ ॥
यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन् परां प्रीतिं गच्छ राम मया सह ॥ १८ ॥

अथ मामेवमव्यग्रां वनं न चैव नयिष्यसि ।
विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ १९ ॥

पश्चादपि हि दुःखेन मम नैवास्ति जीवितं ।
उज्झितायास्त्वया नाथ तदैव मरणं वरं ॥ २० ॥

इमं हि सहितुं शोकं मुहूर्तमपि नोत्सहे ।
किंपुनर्दशवर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥

इति सा शोकसंतप्ता विलप्य करुणं बहु ।
चुक्रोश पतिमायस्ता भृशमालिंग्य सस्वरं ॥ २२ ॥

सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना ।
चिरसंनियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥

तस्याः स्फटिकसंकाशं वारि संतापसंभवं ।
नेत्राभ्यां परिशुश्राव पङ्कजाभ्यामिवोदकं ॥ २४ ॥

तच्चैवामलचन्द्राभं मुखमायतलोचनं ।
पर्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजं ॥ २५ ॥

तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखितां ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥

न देवि तव दुःखेन स्वर्गमप्यभिरोचये ।
न हि मे ऽस्ति भयं किंचित् स्वयंभोरिव सर्वतः ॥ २७ ॥

तव सर्वमभिप्रायमविज्ञाय शुभानने ।
वासं नारोचये ऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥

यत् सृष्टासि मया सार्द्धं वनवासाय मैथिलि ।
न विहातुं मया शक्या प्रीतिरात्मवता यथा ॥ २९ ॥
धर्मस्तु गजनासोरु सद्भिराचरितः पुरा ।
तं चाहमनुवर्तिष्ये यथा सूर्यं सुवर्चला ॥ ३० ॥
न खल्वहं तु गच्छेयं वनं जनकनन्दिनि ।
वचनं तन्नयति मां पितुः सत्योपबृंहितं ॥ ३१ ॥
एष धर्मश्च सुश्रोणि पितुर्मातुश्च वश्यता ।
आज्ञामहं व्यतिक्रम्य नैव जीवितुमुत्सहे ॥ ३२ ॥
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ।
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुं ॥ ३३ ॥
यत्र त्रयं त्रयो लोकाः पवित्रं तत्समं भुवि ।
नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥ ३४ ॥
न सत्यं दानमानौ वा यज्ञा वाप्याप्तदक्षिणाः ।
तथा बलकराः सीते यथा सेवा पितुर्मता ॥ ३५ ॥
स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च ।
गुरुवृत्त्यनुरोधेन न किंचिदपि दुर्लभं ॥ ३६ ॥
देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा परान् ।
प्राप्नुवन्ति महात्मानो मातृपितृपरायणाः ॥ ३७ ॥
स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥ ३८ ॥

मम सन्ना मतिः सीते नेतुं त्वां दण्डकावनं ।
वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९ ॥
सा हि दिष्टानवद्याङ्गि वनाय मदिरेक्षणे ।
अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४० ॥
सर्वथा सदृशं सीते मम स्वस्य कुलस्य च ।
व्यवसायमनुक्रान्ता कान्ते त्वमतिशोभनं ॥ ४१ ॥
आरभस्व गुरुश्रोणि वनवासक्षमाः क्रियाः ।
नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ॥ ४२ ॥
ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनं ।
प्रयच्छाशंसमानेभ्यः संत्वरस्व च मा चिरं ॥ ४३ ॥
भूषणानि महार्हाणि वरवस्त्राणि यानि च ।
रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥
शयनीयानि यानानि मम चान्यानि यानि च ।
देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरं ॥ ४५ ॥
अनुकूलं सा तु भर्तुर्ज्ञात्वा गमनमात्मनः ।
क्षिप्रं प्रमुदिता देवी दातुमेवोपचक्रमे ॥ ४६ ॥

इत्ययोध्याकाण्डे सीताभ्यनुज्ञा नाम त्रिंशः सर्गः
॥ ३० ॥

## CAPUT XXXI.

### Laxmano data venia proficiscendi.

एवं श्रुत्वा तु संवादं लक्ष्मणः पूर्वमागतः ।
वाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १ ॥
स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाचातियशा राघवं च महाव्रतं ॥ २ ॥
यदि गन्तुं कृता बुद्धिर्वनं गजमृगायुतं ।
अहमप्यनुयास्यामि त्वामग्रे ऽद्य धनुर्धरः ॥ ३ ॥
मद्द्वितीयो ह्यरण्यानि बहूनि विचरिष्यसि ।
पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥
न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं चापि लोकानां कामये न त्वया विना ॥ ५ ॥
एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः ।
रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥
अनुज्ञातस्तु भवता पूर्वमेव यदस्म्यहं ।
किमिदानीं पुनरिदं क्रियते मे निवारणं ॥ ७ ॥

न निवर्तयितव्यो ऽहं जीवन्तं मां यदीच्छसि ।
शरणं त्वां प्रपन्नो ऽस्मि प्रसीदार्य नयस्व मां ॥ ८ ॥
ततो ऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः ।
स्थितं प्रणामिनं धीरं याचमानं कृताञ्जलिं ॥ ९ ॥
स्निग्धो धर्मरतो वीरः सततं सत्पथे स्थितः ।
प्रियः प्राणसमो वश्यो भ्राता चासि सखा च मे ॥ १० ॥
मयाद्य सह सौमित्रे त्वयि गच्छति तद्वनं ।
को भरिष्यति कौशल्यां सुमित्रां वा यशस्विनीं ॥ ११ ॥
अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव ।
स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥
सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता ।
दुःखितानां सपत्नीनां न करिष्यति शोभनं ॥ १३ ॥
न स्मरिष्यति कौशल्यां सुमित्रां च सुदुःखितां ।
भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः ॥ १४ ॥
तामार्यां स्वयमेवेह राजानुग्रहणेन वा ।
सौमित्रे भर कौशल्यामुक्तमर्थमिमं चर ॥ १५ ॥
एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता ।
धर्मज्ञ गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥
एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन ।
अस्माभिर्विप्रहीणाया मातुर्नो न भवेत् सुखं ॥ १७ ॥

एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा ।
प्रत्युवाच ततो रामं वाक्यज्ञो वाक्यकोविदं ॥ १८ ॥
तवैव तेजसा वीर भरतः पूजयिष्यति ।
कौशल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९ ॥
यदि दुष्टो न रक्षेत भरतो राज्यमुत्तमं ।
प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः ॥ २० ॥
तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः ।
तत्पक्षानपि तान् सर्वांस्त्रिलोक्यमपि किंतु सा ॥ २१ ॥
कौशल्या बिभृयादार्या सहस्रमपि मद्विधान् ।
यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीवनं ॥ २२ ॥
तदात्मभरणे चैव मम मातुस्तथैव च ।
पर्याप्ता मद्विधानां च भरणाय मनस्विनी ॥ २३ ॥
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्प्यते ॥ २४ ॥
धनुरादाय सशरं खनित्रपिटकाधरः ।
अग्रतस्ते गमिष्यामि पन्थानं परिशोधयन् ॥ २५ ॥
आहरिष्यामि ते नित्यं मूलानि च फलानि च ।
वन्यानि यानि चान्यानि स्वाहाराणि तपस्विनां ॥
भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७ ॥

रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तं ।
व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनं ॥ २८ ॥
ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयं ।
जनकस्य महायज्ञे धनुषी रुद्रदर्शने ॥ २९ ॥
अभेद्ये कवचे दिव्ये तूणी चाक्षय्यसायकौ ।
आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि ।
स त्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ ३१ ॥
स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः ।
इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमं ॥ ३२ ॥
तद्दिव्यं रघुशार्दूलः सत्कृतं माल्यभूषितं ।
रामाय दर्शयामास सौमित्रिः सर्वमायुधं ॥ ३३ ॥
तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतं ।
काले त्वमागतः सौम्य काङ्क्षितो मम लक्ष्मण ॥ ३४ ॥
अहं प्रदातुमिच्छामि यदिदं मामकं धनं ।
ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परंतप ॥ ३५ ॥
ये चास्मासु सदा भक्ता निवसन्तीह लक्ष्मण ।
तेषामपि प्रदेयं मे सर्वेषामुपजीविनां ॥ ३६ ॥
वशिष्ठपुत्रं तु सुयज्ञमार्यं ।
त्वमानयाशु प्रवरं द्विजानां ।

अभिप्रयास्यामि वनं समस्तान् ।
अभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥ २७ ॥

इत्ययोध्याकाण्डे लक्ष्मणाभ्यनुज्ञा नाम एकत्रिंशः सर्गः ॥ ३१ ॥

---

CAPUT XXXII.

Rerum pretiosarum donatio.

ततः शासनमाज्ञाय भ्रातुः प्रियकरं हितं ।
गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनं ॥ १ ॥
तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् ।
सखे ऽभ्यागछ रामस्य वेश्म दुष्करकारिणः ॥ २ ॥
ततः संध्यामुपास्याय गत्वा सौमित्रिणा सह ।
जुष्टं तत् प्राविशल्लक्ष्म्या रम्यं रामनिवेशनं ॥ ३ ॥
तमागतं वेदविदं प्राञ्जलिः सीतया सह ।
सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितं ॥ ४ ॥
जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः ।
सहेमसूत्रैर्मणिभिः केयूरैर्बलयैरपि ॥ ५ ॥

अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् ।
सुयज्ञं स तदोवाच रामः सीताप्रचोदितः ॥ ६ ॥
हारं च हेमसूत्रं च भार्यायै सौम्य हारय ।
रसनां चाथ सा सीता दातुमिच्छति ते सखे ॥ ७ ॥
अङ्गदानि च चित्राणि केयूराणि शुभानि च ।
प्रयच्छति सखे तुभ्यं भार्यायै गच्छती वनं ॥ ८ ॥
पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितं ।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९ ॥
नागः शत्रुंजयो नाम मातुलो यं ददौ मम ।
तं ते निष्कसहस्रेण ददामि द्विजपुंगव ॥ १० ॥
इत्युक्तः स तु रामेण सुयज्ञः प्रतिगृह्य तत् ।
रामलक्ष्मणसीतानां प्रयुयोजाशिषः शिवाः ॥ ११ ॥
अथ भ्रातरमव्यग्रं प्रियं रामः प्रियंवदः ।
सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरं ॥ १२ ॥
अगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ ।
अर्चयाहूय सौमित्रे रत्नैः शस्यमिवाम्बुभिः ॥ १३ ॥
तर्पयस्व महाबाहो गोसहस्रेण राघव ।
सुवर्णरजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥
कौशल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति ।
आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥

तस्य यानं च दासीश्च सौमित्रे संप्रदापय ।
कौशेयानि च वस्त्राणि यावत् तुष्यति स द्विजः ॥ १६ ॥
सूतश्चित्ररथश्चार्यः सचिवः सुचिरोषितः ।
तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥ १७ ॥
ये चेमे कठकालापा बहवो दण्डमानवाः ।
नित्यस्वाध्यायशीलत्वान्नान्यत् कुर्वन्ति किंचन ॥ १८ ॥
अलसाः स्वादुकामाश्च महतां चापि संमताः ।
तेषामशीतिं यानानि रत्नपूर्णानि दापय ॥ १९ ॥
शालिवाहसहस्रं च द्वे शते भद्रकांस्तथा ।
व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु ॥ २० ॥
मेखलिनां महासंघः कौशल्यां समुपस्थितः ।
तेषां सहस्रं सौमित्रे प्रत्येकं संप्रदापय ॥ २१ ॥
अम्बा यथा नो नन्देश्च कौशल्या मम दक्षिणां ।
तथा द्विजातींस्तान् सर्वाँल्लक्ष्मणार्चय सर्वशः ॥ २२ ॥
अथाब्रवीद्बाष्पकलांस्तिष्ठतो रघुनन्दनः ।
संप्रदाय बहु द्रव्यमेकैकस्योपजीवनं ॥ २३ ॥
लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ।
अशून्यं कार्यमेकैकं यावदागमनं मम ॥ २४ ॥
इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनं ।
उवाचेदं धनाध्यक्षं धनमानीयतामिति ॥ २५ ॥

ततोऽस्य धनमाजह्रुः सर्व एवोपजीविनः ।
स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ॥ २६ ॥
ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ।
द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् ॥ २७ ॥
तत्रासीत् पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ।
उञ्छवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥ २८ ॥
तं वृद्धं तरुणी भार्या बालानादाय दारकान् ।
अब्रवीद्ब्राह्मणं वाक्यं दारिद्र्येणाभिपीडिता ॥ २९ ॥
अपास्य फालकुद्दालं कुरुष्व वचनं मम ।
रामं दर्शय धर्मज्ञं यदि किंचिदवाप्स्यसि ॥ ३० ॥
भार्याया वचनं श्रुत्वा शाटीमाच्छाद्य दुश्छदां ।
स प्रातिष्ठत पन्थानं यत्र रामनिवेशनं ॥ ३१ ॥
भृग्वङ्गिरःसमं दीप्त्या त्रिजटं जनसंसदि ।
आ पञ्चमायाः कक्षाया नैनं कश्चिदवारयत् ॥ ३२ ॥
स राममासाद्य तदा त्रिजटो वाक्यमब्रवीत् ।
दरिद्रोऽस्म्यसमर्थश्च बहुपुत्रश्च राघव ॥ ३३ ॥
उञ्छवृत्तिर्वनचरः प्रत्यवेक्षस्व मामपि ।
तमुवाच ततो रामः परिहाससमन्वितं ॥ ३४ ॥
गवां सहस्रमस्त्येकं यदविश्राणितं मया ।
परिक्षिपसि दण्डेन यावत् तावदवाप्स्यसि ॥ ३५ ॥

स शाटीं परितः कक्ष्यां संभ्रान्तः परिवेष्ट्य तां ।
आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगतः ॥ ३६ ॥
स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ।
गोव्रजे बहुसाहस्रे पपातोक्ष्णां च संनिधौ ॥ ३७ ॥
तं परिष्वज्य धर्मात्मा आ तस्मात् सरयूतटात् ।
आनयामास ता गावस्त्रिजटस्याश्रमं प्रति ॥ ३८ ॥
उवाच च तदा रामस्तं गार्ग्यमभिशान्त्वयन् ।
मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम ॥ ३९ ॥
एतद्धैव सहस्रं ते गवां गोपैरहं सह ।
ददामि भूयश्च धनं यावदिच्छसि शाधि मां ॥ ४० ॥
इत्युक्तस्त्रिजटो वव्रे यज्ञेयमिति राघव ।
तस्मै रामो ददौ द्रव्यं प्रभूतं यज्ञसिद्धये ॥ ४१ ॥

इत्ययोध्याकाण्डे चित्रविश्राणिको नाम द्वात्रिंशः सर्गः
॥ ३२ ॥

---

## CAPUT XXXIII.

### CIVIUM SERMO.

दत्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १ ॥
ततो गृहीते प्रेष्याभ्यामशोभेतां तदायुधे ।
मालादामभिरासक्ते सीतया समलंकृते ॥ २ ॥
ततः प्रासादहर्म्याणि विमानशिखराणि च ।
अभिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३ ॥
न हि रथ्याः सुशक्यन्ते गन्तुं बहुजनाकुलाः ।
आरुह्य तस्मात् प्रासादान् दीनाः पश्यन्ति राघवं ॥ ४ ॥
पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः ।
ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५ ॥
यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।
तमेकं सीतया सार्द्धमनुगच्छति लक्ष्मणः ॥ ६ ॥
ऐश्वर्यस्य रसज्ञः सन् कामानां चैव कामदः ।
नेच्छत्येवानृतं कर्तुं वचनं धर्मगौरवात् ॥ ७ ॥
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥
अङ्गरागोचितां सीतां रक्तचन्दनसेविनीं ।
वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णतां ॥ ९ ॥

अद्य नूनं दशरथः सत्त्वमाविश्य भाषते ।
न हि राजा प्रियं पुत्रं विवासयितुमर्हति ॥ १० ॥
निर्गुणस्यापि पुत्रस्य कथं स्यात् विप्रवासनं ।
किंपुनर्यस्य लोकोऽयं जितो वृत्तेन केवलं ॥ ११ ॥
आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः ।
राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभं ॥ १२ ॥
तस्मात् तस्योपघातेन प्रजाः परमपीडिताः ।
औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३ ॥
पीडया पीडितं सर्वं जगदस्य जगत्पतेः ।
मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४ ॥
मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः ।
पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥ १५ ॥
ते लक्ष्मण इव क्षिप्रं सपत्न्यः सहबान्धवाः ।
गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६ ॥
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
एकदुःखसुखा राममनुगच्छाम धर्मिकं ॥ १७ ॥
समुद्धृतनिधानानि परिध्वस्ताजिराणि च ।
उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १८ ॥
रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः ।
मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ १९ ॥

अपेतोदकधूमानि हीनसंमार्जनानि च ।
प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २० ॥
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ।
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यतां ॥ २१ ॥
वनं नगरमेवास्तु येन गच्छति राघवः ।
अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनं ॥ २२ ॥
बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः ।
त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥ २३ ॥
अस्मत्त्यक्तं प्रपद्यन्तु सेव्यमानं त्यजन्तु च ।
राघवेण वयं सर्वे वने वत्स्याम निर्वृताः ॥ २४ ॥
इत्येवं विविधा वाचो नानाजनसमीरिताः ।
शुश्राव राघवः श्रुत्वा न विचक्रेऽस्य मानसं ॥ २५ ॥
स तु वेश्म पितुर्दूरात् कैलासशिखरप्रभं ।
अभिचक्राम धर्मात्मा मत्तमातंगविक्रमः ॥ २६ ॥
विनीतवीरपुरुषं प्रविश्य तु नृपालयं ।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २७ ॥

इत्ययोध्याकाण्डे पौरवाक्यं नाम त्रयस्त्रिंशः सर्गः
॥ ३३ ॥

## CAPUT XXXIV.

### RAMAE ADITUS AD REGIAM.

ततः कमलपत्राक्षः श्यामो निरुपमो महान् ।
उवाच रामस्तं सूतं पितुराख्याहि मामिति ॥ १ ॥
स रामप्रेषितः क्षिप्रं संतापकलुषेन्द्रियं ।
प्रविश्य नृपतिं सूतो निःश्वसन्तं ददर्श ह ॥ २ ॥
उपरक्तमिवादित्यं भस्मछन्नमिवानलं ।
तडागमिव निस्तोयमपश्यज्जगतीपतिं ॥ ३ ॥
आलोक्य तं महाप्राज्ञः परमाकुलचेतसं ।
राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत् ॥ ४ ॥
तं वर्धयित्वा राजानं पूर्वं सूतो जयाशिषा ।
भयविक्लवया वाचा मन्दया श्लक्ष्णमब्रवीत् ॥ ५ ॥
अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः ।
ब्राह्मणेभ्यो धनं दत्वा सर्वं चैवोपजीविनां ॥ ६ ॥
स त्वां पश्यतु भद्रं ते रामः सत्यपराक्रमः ।
सर्वान् सुहृद आपृच्छ्य त्वां हीदानीं दिदृक्षते ॥ ७ ॥
गमिष्यति महारण्यं तं पश्य जगतीपते ।
वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥ ८ ॥

स सत्यवादी धर्मात्मा गाम्भीर्यात् सागरोपमः ।
आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तं ॥ ९ ॥
सुमन्त्रानय मे दारान् ये केचिदिह मामकाः ।
दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि राघवं ॥ १० ॥
सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् ।
आर्या ह्वयति वो राजा गम्यतां तत्र मा चिरं ॥ ११ ॥
एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया ।
प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनं ॥ १२ ॥
अर्द्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः ।
कौशल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३ ॥
आगतेषु च दारेषु समवेक्ष्य महीपतिः ।
उवाच राजा तं सूतं सुमन्त्रानय मे सुतं ॥ १४ ॥
स सूतो राममादाय लक्ष्मणं मैथिलीं तथा ।
जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १५ ॥
स राजा पुत्रमायान्तं दृष्ट्वा दूरात् कृताञ्जलिं ।
उत्पपातासनात् तूर्णमार्त्तः स्त्रीजनसंवृतः ॥ १६ ॥
सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशांपतिः ।
तमसंप्राप्तः संभ्रान्तः पपात भुवि मूर्छितः ॥ १७ ॥
तं रामोऽभ्यपतत् क्षिप्रं लक्ष्मणश्च महारथः ।
विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा ॥ १८ ॥

स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि ।
हा हा रामेति सहसा भूषणध्वनिमिश्रितः ॥ १९ ॥
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ।
पर्यङ्के सीतया सार्द्धं रुदन्तः समवेशयन् ॥ २० ॥
अथ रामो मुहूर्तात् तं लब्धसंज्ञं महीपतिं ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतं ॥ २१ ॥
आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन मां ॥ २२ ॥
लक्ष्मणं चानुजानीहि सीता चान्वेतु मां वनं ।
कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥ २३ ॥
अनुजानीहि सर्वान् नः शोकमुत्सृज्य मानद ।
लक्ष्मणं मां च सीतां च प्रजापतिरिव प्रजाः ॥ २४ ॥
प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः ।
उवाच राजा संप्रेक्ष्य वनवासाय राघवं ॥ २५ ॥
अहं राघव कैकेय्या वरदानेन मोहितः ।
अयोध्यायां त्वमेवाद्य भव राजा निगृह्य मां ॥ २६ ॥
एवमुक्तो नृपतिना रामो धर्मभृतां वरः ।
प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः ॥ २७ ॥
राजा वर्षसहस्राय भवानेवास्तु नः पुरे ।
अहं त्वरण्ये वत्स्यामि न मे राज्यस्य काङ्क्षिता ॥ २८ ॥

नव पञ्च च वर्षाणि वनवासे विहृत्य ते ।
पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ॥ २९ ॥
रुदन्नार्त्तः प्रियं पुत्रं सत्यपाशेन संयुतः ।
कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत् ॥ ३० ॥
श्रेयसे वृद्धये तात पुनरागमनाय च ।
गच्छस्वारिष्टमव्यग्रं पन्थानमकुतोभयं ॥ ३१ ॥
न हि सत्यात्मनस्तात धर्माभिमनसस्तव ।
संनिवर्तयितुं बुद्धिः शक्यते रघुनन्दन ॥ ३२ ॥
अद्य त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा ।
एकाहं दर्शनेनापि साधु तावच्चराम्यहं ॥ ३३ ॥
मातरं मां च संपश्य वसेमामद्य शर्वरीं ।
तर्पितः सर्वकामैस्त्वं श्वः काल्ये साधयिष्यसि ॥ ३४ ॥
दुष्करं क्रियते पुत्र सर्वथा राघव त्वया ।
मत्प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनं ॥ ३५ ॥
न चैतन्मे प्रियं पुत्र शपे सत्येन राघव ।
छन्नया छलितस्त्वस्मि स्त्रिया भस्माग्निकल्पया ॥ ३६ ॥
वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमर्हसि ।
अनया वृत्तसादिन्या कैकेय्याभिप्रचोदितः ॥ ३७ ॥
न चैतदाश्चर्यतमं यत् त्वं ज्येष्ठः सुतो मम ।
अपानृतकथं पुत्र पितरं कर्तुमिच्छसि ॥ ३८ ॥

अथ रामस्तदा श्रुत्वा पितुरार्त्तस्य भाषितं ।
लक्ष्मणेन सह भ्रात्रा दीनो वचनमब्रवीत् ॥ ३९ ॥
प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति ।
अपक्रमणमेवाथ सर्वकामैरहं वृणे ॥ ४० ॥
इयं सराष्ट्रा सजना धनधान्यसमाकुला ।
मया विसृष्टा वसुधा भरताय प्रदीयतां ॥ ४१ ॥
यस्तुष्टेन वरो दत्तः कैकेय्यै वरद त्वया ।
दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव ॥ ४२ ॥
अहं निदेशं भवतो यथोक्तमनुपालयन् ।
चतुर्दश समा वत्स्ये वने वनचरैः सह ॥ ४३ ॥
न हि मे काङ्क्षितं राज्यं सुखमात्मनि वा प्रियं ।
यथा निदेशं कर्तुं ते त्वरा मे रघुनन्दन ॥ ४४ ॥
अपगच्छतु ते दुःखं मा भूर्बाष्पपरिप्लुतः ।
न हि क्षुभ्यति दुर्धर्षः समुद्रः सरितां पतिः ॥ ४५ ॥
नैवाहं राज्यमिच्छामि न सुखं न च मेदिनीं ।
नैव सर्वानिमान् कामान् न स्वर्गं न च जीवितं ॥ ४६ ॥
त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ ।
प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४७ ॥
न च शक्यं मया तात स्थातुं क्षणमपि प्रभो ।
स शोकं धारयस्वेमं न हि मेऽस्ति विपर्ययः ॥ ४८ ॥

अर्थितो ह्यस्मि कैकेय्या वनं गह्वेति राघव ।
मया चोक्तं व्रजामीति तत् सत्यमनुपालये ॥ ४९ ॥
मा चोत्कण्ठां कृथा देव वने रंस्यामहे वयं ।
प्रशान्तहरिणाकीर्णे नानाशकुनिनादिते ॥ ५० ॥
पिता हि दैवतं तात देवतानामपि स्मृतं ।
तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५१ ॥
चतुर्दशसु वर्षेषु गतेषु नरसत्तम ।
पुनर्द्रक्ष्यसि मां प्राप्तं संतापोऽयं विमुच्यतां ॥ ५२ ॥
येन संस्तम्भनीयोऽयं सर्वो बाष्पकलो जनः ।
स त्वं पुरुषशार्दूल किमर्थं विक्रियां गतः ॥ ५३ ॥

इत्ययोध्याकाण्डे रामप्रवेशो नाम चतुस्त्रिंशः सर्गः
॥ ३४ ॥

## CAPUT XXXV.

### Probra in Caeceidem iacta.

ततो निर्धूय सहसा शिरो निःश्वस्य चासकृत् ।
पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाप्य च ॥ १ ॥
लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत् ।
कोपाभिभूतः सहसा संतापमशुभं गतः ॥ २ ॥
मनः समीक्षमाणश्च सूतो दशरथस्य सः ।
कम्पयन्निव कैकेय्या हृदयं वाक्शरैः शितैः ॥ ३ ॥
वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव चाशुगैः ।
कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥
यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयं ।
भर्ता सर्वस्य जगतः स्थावरस्य चरस्य च ॥ ५ ॥
न ह्यकार्यतमं किंचित् तव देवीह विद्यते ।
पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥ ६ ॥
यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलं ।
महोदधिमिवाक्षोभ्यं संतापयसि कर्मभिः ॥ ७ ॥
नावमंस्था दशरथं भर्तारं वरदं पतिं ।
भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ॥ ८ ॥

यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये ।
इक्ष्वाकुकुलनाथे ऽस्मिंस्तल्लोपयितुमिच्छसि ॥ ९ ॥
राजा भवतु ते पुत्रो भरतः शास्तु मेदिनीं ।
वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १० ॥
न हि ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति ।
तादृशं त्वममर्यादं कर्म कर्तुं चिकीर्षसि ॥ ११ ॥
आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशं ।
आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १२ ॥
महाब्रह्मर्षिसृष्टा वा ज्वलन्तो भीमदर्शनाः ।
धिग्वाग्दण्डा न हिंसन्ति रामप्रव्राजने स्थितां ॥ १३ ॥
आम्रं छित्त्वा कुठारेण निम्बं परिचरेत तु यः ।
यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १४ ॥
आभिजात्यं हि ते मन्ये यथा मातुस्तथैव च ।
न हि निम्बात् स्रवेत् क्षौद्रं लोके विगदितं वचः ॥ १५ ॥
तव मातुरसद्ग्राहं विद्मपूर्वं यथा श्रुतं ।
पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमं ॥ १६ ॥
सर्वभूतरुतं तस्मात् संजज्ञे वसुधाधिपः ।
तेन तिर्यग्गतानां च भूतानां विदितं वचः ॥ १७ ॥
ततो जृम्भस्य शयने विरुताद्भूरिवर्चसः ।
पितुस्ते विदितो भावः स तत्र बहुधाहसत् ॥ १८ ॥

तत्र ते जननी क्रुद्धा मृत्युपाशमभीप्सती ।
हासं ते नृपते सौम्य जिज्ञासामीति चाब्रवीत् ॥ १९ ॥
नृपश्चोवाच तां देवीं हासं शंसामि ते यदि ।
ततो मे मरणं सद्यो भविष्यति न संशयः ॥ २० ॥
माता ते पितरं देवि पुनः केकयमब्रवीत् ।
शंस मे जीव वा मा वा न मामपहसिष्यसि ॥ २१ ॥
प्रियया च तथोक्तः स केकयः पृथिवीपतिः ।
तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २२ ॥
ततः स वरदः साधू राजानं प्रत्यभाषत ।
म्रियतां ध्वंसतां वेयं मा कृथास्त्वं महीपते ॥ २३ ॥
स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः ।
मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २४ ॥
तथा त्वमपि राजानं दुर्जनाचरिते पथि ।
असद्ग्राहमिमं मोहात् कुरुषे पापदर्शिनी ॥ २५ ॥
सत्यश्चात्र प्रवादोऽयं लौकिकः प्रतिभाति मां ।
पितॄन् समनुजायन्ते नरा मातरमङ्गनाः ॥ २६ ॥
नैवं भव गृहाणेदं यदाह वसुधाधिपः ।
भर्तुरिच्छामुपास्येह जनस्यास्य गतिर्भव ॥ २७ ॥
मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभं ।
भर्तारं लोकभर्तारमसद्धर्ममुपादधाः ॥ २८ ॥

न हि मिथ्या प्रतिज्ञातं करिष्यति तवानघः ।
श्रीमान् दशरथो राजा देवि रामोऽभिषिच्यतां ॥ २९ ॥
परिवादो हि ते देवि महाँल्लोके चरिष्यति ।
यदि रामो वनं याति विहाय पितरं नृपं ॥ ३० ॥
स्वराज्यं राघवः पातु भव त्वं विगतज्वरा ।
न हि ते राघवादन्यः क्षमः पुरवरे वसेत् ॥ ३१ ॥
रामे हि यौवराज्यस्थे राजा दशरथो वनं ।
प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् ॥ ३२ ॥
इति शान्त्वैश्च तीक्ष्णैश्च कैकेयीं राजसंसदि ।
भूयः संक्षोभयामास सुमन्त्रस्तु कृताञ्जलिः ॥ ३३ ॥
नैव सा क्षुभ्यते देवी न च स्म परिदूयते ।
न चास्य मुखवर्णस्य लक्ष्यते विक्रिया तदा ॥ ३४ ॥

इत्ययोध्याकाण्डे कैकेयीगर्हणं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## CAPUT XXXVI.

### SIDDHARTHI SERMO.

ततः सुमन्त्रमिक्ष्वाकुः पीडितः स्वप्रतिज्ञया ।
सबाष्पमतिनिःश्वस्य जगादेदं पुनर्वचः ॥ १ ॥
सूत रत्नसुसंपूर्णा चतुर्विधबला चमूः ।
राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयतां ॥ २ ॥
रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः ।
शोभयन्तु कुमारस्य वाहिनीः सुप्रसारिताः ॥ ३ ॥
ये चैनमुपजीवन्ति रमते यैश्च वीर्यतः ।
तेषां बहु धनं दत्वा तानप्यत्र नियोजय ॥ ४ ॥
आयुधानि च मुख्यानि नागराः शकटानि च ।
अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्यकोविदाः ॥ ५ ॥
निघ्नन् मृगान् कुञ्जरांश्च पिबंश्चारण्यकं मधु ।
नदीश्च विविधाः पश्यन् न राज्यं संस्मरिष्यति ॥ ६ ॥
धान्यकोषश्च यः कश्चिद्धनकोषश्च मामकः ।
तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७ ॥
यजन् पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः ।
ऋषिभिश्चाभिसंगम्य प्रवत्स्यति सुखं वने ॥ ८ ॥

भरतश्च महाबाहुरयोध्यां पालयिष्यति ।
सर्वकामैः पुनः श्रीमान् रामः संसाध्यतामिति ॥ ९ ॥
एवं ब्रुवति काकुत्स्थे कैकेय्या भयमागतं ।
मुखं चास्याऽगमच्छोषं स्वरश्चापि व्यरुध्यत ॥ १० ॥
सा विषण्णा च संत्रस्ता मुखेन परिशुष्यता ।
राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत् ॥ ११ ॥
राज्यं गतजनं साधो पीतमण्डां सुरामिव ।
निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२ ॥
कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणं ।
राजा दशरथो वाक्यमुवाचायतलोचनां ॥ १३ ॥
वहन्तं किं तुदसि मां नियुज्य धुरि मा हिते ।
अनार्ये कृत्यमारब्धं किं न पूर्वमुपारुधः ॥ १४ ॥
तस्यैतत् क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना ।
कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५ ॥
तवैव वंशे सगरो ज्येष्ठं पुत्रमुपारुधत् ।
असमञ्ज इति ख्यातं तथायं गन्तुमर्हति ॥ १६ ॥
एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् ।
व्रीडितश्च जनः सर्वः सा च तं नावबुध्यत ॥ १७ ॥
तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः ।
शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥

असमञ्जो गृहीत्वा तु क्रीडतः पथि दारकान् ।
सरय्वां प्रक्षिपन्नप्सु रमते तेन दुर्मतिः ॥ १९ ॥
तं दृष्ट्वा नागराः सर्वे क्रुद्धा राजानमब्रुवन् ।
असमञ्जं वृणीष्वैकमस्मान् वा राष्ट्रवर्धन ॥ २० ॥
तानुवाच ततो राजा किंनिमित्तमिदं भयं ।
ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥ २१ ॥
क्रीडतस्त्वेष नः पुत्रान् बालानुद्भ्रान्तचेतसः ।
सरय्वां प्रक्षिपन् मौर्ख्यादतुलां प्रीतिमश्नुते ॥ २२ ॥
स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः ।
तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३ ॥
तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदं ।
यावज्जीवं विवास्योऽयमिति स्वानन्वशात् पिता ॥
स फालपिटकं गृह्य गिरिदुर्गाण्यलोकयत् ।
दिशः सर्वास्त्वनुचरन् स यथा पापकर्मकृत् ॥ २५ ॥
इत्येनमत्यजद्राजा सगरो वै सुधार्मिकः ।
रामः किमकरोत् पापं येनैवमुपरुध्यते ॥ २६ ॥
न हि कंचन पश्यामो राघवस्यागुणं वयं ।
दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषं ॥ २७ ॥
अथ वा देवि दोषं त्वं कंचित् पश्यसि राघवे ।
तमद्य ब्रूहि तत्त्वेन तदा रामो विवास्यते ॥ २८ ॥

अदुष्टस्य हि संत्यागः सत्पथे ऽभिरतस्य च ।
निर्दहेदपि शक्रस्य द्युतिं धर्मविरोधनात् ॥ २९ ॥
तदलं देवि रामस्य श्रिया विहतया त्वया ।
लोकतो ऽपि हि ते रक्ष्यः परिवादः शुभानने ॥ ३० ॥

इत्ययोध्याकाण्डे सिद्धार्थवाक्यं नाम षट्त्रिंशः सर्गः
॥ ३६ ॥

---

## CAPUT XXXVII.

### TEGETUM INDUTUS.

महामात्रवचः श्रुत्वा रामो दशरथं तदा ।
अभ्यभाषत वाक्यं तु विनयज्ञो विनीतवत् ॥ १ ॥
त्यक्तभोगस्य मे राजन् वने वन्येन जीवतः ।
किं कार्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २ ॥
यो हि दत्वा द्विपश्रेष्ठं कक्षायां कुरुते मनः ।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमं ॥ ३ ॥
तथा मम सतां श्रेष्ठ किं ध्वजिन्या जगत्पते ।
सर्वमेवानुजानामि चीराण्येवानुयन्तु मे ॥ ४ ॥

खनित्रपिटके चोभे समानयत गच्छतः ।
चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५ ॥
अथ चीराणि कैकेयी स्वयमाहृत्य राघवं ।
उवाच परिधत्स्वेति जनौघे निरपत्रपा ॥ ६ ॥
स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते ।
सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ॥ ७ ॥
लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे ।
तापसाच्छादने वीरो जग्राह पितुरग्रतः ॥ ८ ॥
अथात्मपरिधानार्थं सीता कौशेयवासिनी ।
संप्रेक्ष्य चीरं संत्रस्ता पृषती वागुरामिव ॥ ९ ॥
सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः ।
कैकेय्याः कुशचीरे ते सीता साश्राविलेक्षणा ॥ १० ॥
लज्जमाना स्थिता पार्श्वे रामस्य शुभदर्शना ।
गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् ॥ ११ ॥
कथं नु चीरं बध्नन्ति मुनयो वनवासिनः ।
इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२ ॥
कृत्वा कण्ठे स्म सा चीरमेकमादाय पाणिना ।
तस्थौ तु व्याकुला तत्र व्रीडिता जनकात्मजा ॥ १३ ॥
तस्यास्तत् क्षिप्रमागम्य रामो धर्मभृतां वरः ।
चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयं ॥ १४ ॥

रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमं ।
अन्तःपुरचरा नार्यो मुमुचुर्वारि नेत्रजं ॥ १५ ॥
ऊचुश्च परमायत्ता रामं ज्वलिततेजसं ।
वत्स मैवं नियुक्तेयं वनवासे मनस्विनी ॥ १६ ॥
पितुर्वाक्यानुरोधेन गतस्य विजनं वनं ।
तावद्दर्शनमस्या नः सफलं भवतु प्रभो ॥ १७ ॥
लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक ।
नेयमर्हति कल्याणी वस्तुं तापसवद्वने ॥ १८ ॥
कुरु नो याचनां राम सीता तिष्ठतु भामिनी ।
धर्मनित्यः स्वयं स्थातुं न हीदानीं त्वमिच्छसि ॥ १९ ॥
चीरे गृहीते तु तया समीक्ष्य नृपतेर्गुरुः ।
निवार्य सीतां कैकेयीं वशिष्ठो वाक्यमब्रवीत् ॥ २० ॥
अतिदुर्वृत्ते दुर्मेधे केकयकुलपांसनि ।
वञ्चयित्वा तु राजानं सप्रमाणेव तिष्ठसे ॥ २१ ॥
न गन्तव्यं वनं देव्या सीतया शीलवर्जिते ।
अनुष्ठास्यति रामस्य सीता प्रकृतमासनं ॥ २२ ॥
आत्मा हि दारा सर्वेषां दारसंग्रहवर्तिनां ।
आत्मेयमिति रामस्य पालयिष्यति मेदिनीं ॥ २३ ॥
अथ यास्यति वैदेही वनं रामेण संगता ।
वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २४ ॥

अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः ।
सहोपजीव्यं राष्ट्रं च पुरं च सपरिच्छदं ॥ २५ ॥
भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः ।
वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजं ॥ २६ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह ।
त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता ॥ २७ ॥
न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः ।
तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २८ ॥
न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति ।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ २९ ॥
यद्यपि त्वं क्षितितलाद्गगणामुत्पतिष्यसि ।
पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३० ॥
तत् त्वया पुत्रगर्धिन्या पुत्रस्य कृतमप्रियं ।
लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३१ ॥
द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् ।
गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३२ ॥

इत्ययोध्याकाण्डे चीरपरिग्रहो नाम सप्तत्रिंशः सर्गः
॥ ३७ ॥

## CAPUT XXXVIII.

### Causalya marito commendata.

तस्यां चीरं वसानायां नाथवत्यामनाथवत् ।
प्रचुक्रोश जनः सर्वो धिक् त्वां दशरथ त्विति ॥ १ ॥
तेन तत्र प्रणादेन दुःखितः स महीपतिः ।
चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ॥ २ ॥
स निःश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् ।
कैकेयि कुशचीरेण न सीता गन्तुमर्हति ॥ ३ ॥
सुकुमारी च बाला च सततं च सुखोचिता ।
नेयं वनस्य योग्येति सत्यमाह गुरुर्मम ॥ ४ ॥

इयं हि कस्यापकरोति किंचित् ।
तपस्विनी राजवरस्य पुत्री ।
या चीरमासाद्य जनस्य मध्ये ।
स्थिता विसंज्ञा श्रमणीव काचित् ॥ ५ ॥
चीराण्यपास्याज्जनकस्य कन्या ।
नेयं प्रतिज्ञा मम दत्तपूर्वा ।
यथासुखं गच्छतु राजपुत्री ।
वनं समग्रा सह सर्वरत्नैः ॥ ६ ॥

अजीवनार्हेण मया नृशंसा ।
कृता प्रतिज्ञा नियमेन तावत् ।
त्वया हि बाल्यात् प्रतिपन्नमेतत् ।
तन्मां दहेद्वेणुमिवात्मपुष्पं ॥ ७ ॥
रामेण यदि ते पापे किंचित् कृतमशोभनं ।
अपकारः क इह ते वैदेह्या दर्शितोऽधमे ॥ ८ ॥
मृगीवोत्फुल्लनयना मृदुशीला मनस्विनी ।
अपकारं कमिव ते करोति जनकात्मजा ॥ ९ ॥
ननु पर्याप्तमेकं ते पापे रामविवासनं ।
किमेभिः कृपणैर्भूयः पापकैरपि ते कृतैः ॥ १० ॥
प्रतिज्ञातं मया तावत् त्वयोक्तं देवि शृण्वता ।
रामं यदभिषेकाय त्वमिहागतमब्रवीः ॥ ११ ॥
तत् त्वेतत् समतिक्रम्य निरयं गन्तुमिहसि ।
मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीं ॥ १२ ॥
एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनं ।
अवाक्शिरसमासीनमिदं वचनमब्रवीत् ॥ १३ ॥
इयं धार्मिक कौशल्या मम माता यशस्विनी ।
वृद्धा चानुद्रशीला च न च त्वां देव गर्हते ॥ १४ ॥
मया विहीनां वरद प्रपन्नां शोकसागरं ।
अदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि ॥ १५ ॥

पुत्रशोकं यथा नर्छेत् त्वया पूज्येन पूजिता ।
मां हि संचिन्तयन्तीयं मयि जीवेत् तपस्विनी ॥ १६ ॥
इमां महेन्द्रोपम जातगर्धिनीं ।
तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता ।
न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १७ ॥

इत्ययोध्याकाण्डे कौशल्याप्रशंसा नाम अष्टात्रिंशः सर्गः
॥ ३८ ॥

---

## CAPUT XXXIX.

### SITAE ADMONITIO.

रामस्य तु वचः श्रुत्वा मुनिवेशधरं च तं ।
समीक्ष्य सह भार्याभी राजा विगतचेतनः ॥ १ ॥
नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवं ।
न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २ ॥
स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः ।
विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३ ॥

मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ।
प्राणिनो हिंसिता वापि तस्मादिदमुपस्थितं ॥ ४ ॥
न त्वेवानागते काले देहाच्च्यवति जीवितं ।
कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५ ॥
यो ऽहं पावकसंकाशं पश्यामि पुरतः स्थितं ।
विहाय वसने सूक्ष्मे तापसाच्छादमात्मजं ॥ ६ ॥
एकस्याः खलु कैकेय्याः कृते ऽयं खिद्यते जनः ।
स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमां ॥ ७ ॥
एवमुक्त्वा तु वचनं वाष्पेण पिहितेन्द्रियः ।
रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक सः ॥ ८ ॥
संज्ञां तु प्रतिलभ्याथ मुहूर्तात् स महीपतिः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९ ॥
औपवाह्यं रथं योज्य त्वमायाहि हयोत्तमैः ।
प्रापयैनं महाभागमितो जनपदात् परं ॥ १० ॥
एवं मन्ये गुणवतां गुणानां फलमुच्यते ।
पित्रा मात्रा च यत् साधुर्वीरो निर्वास्यते वनं ॥ ११ ॥
राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः ।
योजयित्वा ययौ तत्र रथमश्वैरलंकृतं ॥ १२ ॥
तं रथं राजपुत्राय सूतः कनकभूषितं ।
आचचक्षे ऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३ ॥

राजा सबरमाहूय व्यापृतं वित्तसंचये ।
उवाच देशकालज्ञो निश्चितं सर्वतः शुचिं ॥ १४ ॥
वासांसि च महार्हाणि भूषणानि वराणि च ।
वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥ १५ ॥
नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः ।
प्रायच्छत् क्षिप्रमाहृत्य सीतायै सर्वमेव तत् ॥ १६ ॥
सा सुजाता सुजातानि वैदेही प्रस्थिता वनं ।
भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥
व्यराजयत वैदेही वेश्म तत् सुविभूषिता ।
उद्यतोऽंशुमतः काले खं प्रभेव विवस्वतः ॥ १८ ॥
तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् ।
अनाचरन्तीं कृपणां मूर्ध्न्युपाघ्राय मैथिलीं ॥ १९ ॥
असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ २० ॥
एष स्वभावो नारीणामनुभूय पुरा सुखं ।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१ ॥
असत्यशीला विकृता दुर्ग्राह्यहृदयाः सदा ।
युवत्यः पापसंकल्पाः क्षणमात्राद्विरागिणः ॥ २२ ॥
न कुलं न कृतं विद्या न दत्तं न च संग्रहः ।
स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥ २३ ॥

साधीनां तु स्थितानां तु शीले सत्ये श्रुते स्थिते ।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ २४ ॥
स त्वया नावमन्तव्यः पुत्रः प्रव्रजितो वनं ।
तव देवसमस्त्वेष निर्धनः सधनोऽपि वा ॥ २५ ॥
विज्ञाय वचनं सीता तस्या धर्मार्थसंहितं ।
कृताञ्जलिरुवाचेदं श्वश्रूमभिमुखे स्थितां ॥ २६ ॥
करिष्ये सर्वमेवाहमार्या यदनुशास्ति मां ।
अभिज्ञास्मि यथा भर्तुर्वर्तितव्यं श्रुतं च मे ॥ २७ ॥
न मामसज्जनेनार्या समानयितुमर्हति ।
धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा ॥ २८ ॥
नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ।
नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ २९ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥ ३० ॥
साहमेवंगता श्रेष्ठा श्रुतधर्मपरावरा ।
आर्ये किमवमन्येयं स्त्रिया भर्ता हि दैवतं ॥ ३१ ॥
सीतायां वचनं श्रुत्वा कौशल्या हृदयंगमं ।
शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजं ॥ ३२ ॥
तां प्राञ्जलिरभिक्रम्य मातृमध्येऽतिसत्कृतां ।
रामः परमधर्मात्मा मातरं वाक्यमब्रवीत् ॥ ३३ ॥

अम्बा मा दुःखिता भूत्वा पश्येस्त्वं पितरं मम ।
क्षयो ऽपि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४ ॥
सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च ।
सा समग्रमिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतं ॥ ३५ ॥
एतावदभिनीतार्थमुक्त्वा स्वजननीं वचः ।
ददर्शाभ्येत्य मातॄणामर्द्धसप्तशतानि सः ॥ ३६ ॥
ताश्चापि स तथैवार्त्ता मातॄर्दशरथात्मजः ।
धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७ ॥
संवासात् परुषं किंचिदज्ञानादपि यत् कृतं ।
तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥ ३८ ॥
जज्ञे ऽथ तासां संनादः क्रौञ्चीनामिव निस्वनः ।
मानवेन्द्रस्य भार्याणामेवं वदति राघवे ॥ ३९ ॥

मुरजपणववेणुनादितं ।
दशरथवेश्म बभूव यत् पुरा ।
विलपितपरिदेवितस्वनैर्- ।
व्यसनभवैस्तदभूद्विनादितं ॥ ४० ॥

इत्ययोध्याकाण्डे सीतासमादेशो नाम एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## CAPUT XL.

### Ramae profectio.

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ।
उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणं ॥ १ ॥
तं चापि समनुज्ञाप्य धर्मज्ञः सह सीतया ।
राघवः शोकसंमूढां जननीमभ्यवादयत् ॥ २ ॥
ततो मातुः सुमित्रायाः पादौ जग्राह लक्ष्मणः ।
तं वन्दमानं चरणौ सुमित्रा पुत्रमब्रवीत् ॥ ३ ॥
सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ।
रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥ ४ ॥
व्यसनी वा समृद्धो वा गतिरेष तवानघ ।
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ५ ॥
इदं हि वृत्तमुचितं कुलस्यास्य सनातनं ।
दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च ॥ ६ ॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजां ।
अयोध्यामटवीं विद्धि गच्छ तात यथासुखं ॥ ७ ॥
लक्ष्मणं त्वेवमुक्त्वा सा संसिद्धं प्रियराघवं ।
सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तं ॥ ८ ॥

गम्यतामर्थलाभाय क्षेमाय विजयाय च ।
शत्रुपक्षविनाशाय पुनः संदर्शनाय च ॥ ९ ॥
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ।
विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ १० ॥
रथमारोह भद्रं ते राजपुत्र महायशः ।
क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसे ॥ ११ ॥
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया ।
तान्युपक्रमितव्यानि यानि देव्यासि चोदितः ॥ १२ ॥
तं रथं सूर्यसंकाशं सीता हृष्टेन चेतसा ।
आरुरोह वरारोहा कृत्वालंकारमात्मनः ॥ १३ ॥
अथोज्ज्वलनसंकाशं चामीकरविभूषितं ।
तावारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १४ ॥
वनवासं हि संख्याय वासांस्याभरणानि च ।
भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १५ ॥
तथैवायुधजालानि भ्रातृभ्यां कवचानि च ।
रथोपस्थे प्रतिन्यस्य सचर्म कठिनं च यत् ॥ १६ ॥
सीतातृतीयानारूढान् दृष्ट्वा रथमचोदयत् ।
सुमन्त्रः संमतानश्वान् वायुवेगसमान् जवे ॥ १७ ॥
प्रयाते तु महारण्यं चिररात्राय राघवे ।
बभूव नगरे मूर्छा बलमूर्छा जनस्य च ॥ १८ ॥

तत् समाकुलसंभ्रान्तं मत्तसंकुपितद्विपं ।
हयसिञ्जितनिर्घोषं पुरमासीन्महास्वनं ॥ १९ ॥
ततः सबालवृद्धा सा पुरी परमपीडिता ।
राममेवाभिदुद्राव घर्मार्ताः सलिलं यथा ॥ २० ॥
पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः ।
बाष्पपूर्णमुखाः सर्वे तमूचुर्भृशनिस्वनाः ॥ २१ ॥
संयच्छ वाजिनां रश्मीन् सूत याहि शनैः शनैः ।
मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २२ ॥
आयसं हृदयं नूनं राममातुरसंशयं ।
यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥ २३ ॥
कृतकृत्या हि वैदेही छायेवानुगता पतिं ।
न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥ २४ ॥
अहो लक्ष्मण सिद्धार्थः सततं प्रियवादिनं ।
भ्रातरं देवसंकाशं यस्त्वं परिचरिष्यसि ॥ २५ ॥
महत्येषा हि ते बुद्धिरेष चाभ्युदयो महान् ।
एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २६ ॥
एवं वदन्तस्ते सोढुं न शेकुर्बाष्पमागतं ।
नरास्तमनुगच्छन्तः प्रियमिक्ष्वाकुनन्दनं ॥ २७ ॥
अथ राजा वृतः स्त्रीभिर्दीनाभिर्दीनचेतनः ।
निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन् गृहात् ॥ २८ ॥

शुश्रुवे चायतः स्त्रीणां रुदतीनां महास्वनः ।
यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ २९ ॥
पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदा बभौ ।
परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ॥ ३० ॥
स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः ।
सूतं संचोदयामास त्वरितं वाह्यतामिति ॥ ३१ ॥
रामो याहीति तं सूतं तिष्ठेति स जनस्तदा ।
उभयं नाशकत् सूतः कर्तुमध्वनि चोदितः ॥ ३२ ॥
निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः ।
पतितैरभ्यवहितं प्रशशाम महीरजः ॥ ३३ ॥
शुश्राव नयनैः स्त्रीणामश्रमायाससंभवं ।
मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव ॥ ३४ ॥
दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरं ।
निपपातेव दुःखेन कृत्तमूल इव द्रुमः ॥ ३५ ॥
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः ।
नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितं ॥ ३६ ॥
हा रामेति जनाः केचिद्राममातेति चापरे ।
अन्तःपुरं समृद्धं च क्रोशन्तः पर्यदेवयन् ॥ ३७ ॥
अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसं ।
राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ३८ ॥

निबद्ध इव पाशेन किशोरो मातरं यथा ।
धर्मपाशेन संक्षिप्तः प्रकाशं नाभ्युदैक्षत ॥ ३९ ॥
पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ ।
दृष्ट्वा संचोदयामास शीघ्रं याहीति सारथिं ॥ ४० ॥
न हि तत् पुरुषव्याघ्रो दुःखजं दर्शनं पितुः ।
मातुश्च सहितुं शक्तस्तोत्त्रैर्नुन्न इव द्विपः ॥ ४१ ॥
प्रत्यगारमिवायान्ति वत्सला वत्सकारणात् ।
बद्धवत्सा यथा धेनू राममाताभ्यधावत ॥ ४२ ॥
क्रोशन्तीं राम रामेति हा सीते लक्ष्मणेति च ।
असकृत् प्रैक्षत स तां नृत्यन्तीमिव मातरं ॥ ४३ ॥
तिष्ठेति राजा चुक्रोश याहि याहीति राघवः ।
सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥ ४४ ॥
नाश्रौषमिति राजानमुपलब्धोऽपि वक्ष्यसि ।
चिरं दुःखस्य पापिष्ठमिति रामस्तमब्रवीत् ॥ ४५ ॥
स रामस्य वचः कुर्वन्ननुज्ञाप्य च तं जनं ।
व्रजतोऽपि हयान् शीघ्रं चोदयामास सारथिः ॥ ४६ ॥
न्यवर्तत जनो राज्ञो रामं कृत्वा प्रदक्षिणं ।
मनसाप्यश्रुवेगैश्च न न्यवर्तत मानुषं ॥ ४७ ॥
यमिच्छेत् पुनरायान्तं नैनं दूरमनुव्रजेत् ।
इत्यमात्या महाराजमूचुर्दशरथं वचः ॥ ४८ ॥

तेषां वचः सर्वगुणोपपन्नं ।
प्रस्विन्नगात्रः प्रविषण्णरूपः ।
निशम्य राजा कृपणः सभार्यः ।
व्यवस्थितस्तं सुतमीक्षमाणः ॥ ४१ ॥

इत्ययोध्याकाण्डे रामनिर्याणं नाम चत्वारिंशः सर्गः
॥ ४० ॥

---

## CAPUT XLI

### CIVIUM QUERELA.

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रमति कृताञ्जलौ ।
आर्त्तशब्दो हि संजज्ञे स्त्रीणामन्तःपुरे महान् ॥ १ ॥
अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ।
यो गतिः शरणं चासीत् स नाथः क्व नु गच्छति ॥ २ ॥
न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन् ।
क्रुद्धान् प्रसादयन् सर्वान् समदुःखः क्व गच्छति ॥ ३ ॥
कौशल्यायां महातेजा यथा मातरि वर्तते ।
तथा यो वर्ततेऽस्मासु महात्मा क्व नु गच्छति ॥ ४ ॥

कैकेय्या क्लिश्यमानेन राज्ञा संचोदितो वनं ।
परित्राता जनस्यास्य जगतः क्व नु गच्छति ॥ ५ ॥
अहो निश्चेतनो राजा जीवलोकस्य संश्रयं ।
धर्मसत्यव्रतं रामं वनवासे प्रवत्स्यति ॥ ६ ॥
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः ।
रुरुदुश्चैव दुःखार्त्ताः सस्वरं च विचुक्रुशुः ॥ ७ ॥
स तमन्तःपुरे नादं श्रुत्वा तासां महीपतिः ।
पुत्रशोकाग्निसंतप्तः ससाद गतचेतनः ॥ ८ ॥
नाग्निहोत्राण्यहूयन्त सूर्यश्चान्तरधीयत ।
व्यसृजन् कवलान् नागा गावो वत्सान् न पाययन् ॥
त्रिशंकुर्लोहिताङ्गश्च बृहस्पतिबुधावपि ।
दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः ॥ १० ॥
नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः ।
विशाखाश्च सधूमाश्च नभसि प्रचकाशिरे ॥ ११ ॥
कालिकानिलवेगेन महोदधिरिवोत्थितः ।
रामे वनं प्रव्रजिते नगरं प्रचचाल तत् ॥ १२ ॥
अकस्मान्नागरः सर्वो जनो दैन्यमुपागमत् ।
आहारे वा विहारे वा न कश्चिदकरोन्मनः ॥ १३ ॥
बाष्पपर्याकुलमुखो राजमार्गं गतो जनः ।
न हृष्टो लभ्यते कश्चित् सर्वः शोकपरायणः ॥ १४ ॥

न वाति पवनः शीतो न शशी सौम्यदर्शनः ।
न सूर्यस्तापते लोकं सर्वं पर्याकुलं जगत् ॥ १५ ॥
अनर्थिनः सुताः स्त्रीणां भर्तारो भ्रातरस्तदा ।
सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन् ॥ १६ ॥
ये तु रामस्य सुहृदः सर्वे ते मूढचेतसः ।
शोकभारेण चाक्रान्ताः शयनं नैव भेजिरे ॥ १७ ॥
ततस्त्वयोध्या रहिता महात्मना ।
पुरंदरेणेव मही सपर्वता ।
चचाल घोरं भयशोकपीडिता ।
सनागयोधाश्वगणा ननाद च ॥ १८ ॥

इत्ययोध्याकाण्डे पुरजनविलापो नाम एकचत्वारिंशः
सर्गः ॥ ४१ ॥

## CAPUT XLII.

### Dasarathae querela.

यावत् तु निर्यतस्तस्य रजोरूपमदृश्यत ।
नैवेक्ष्वाकुवरस्तावत् संजहारात्मचक्षुषी ॥ १ ॥
यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकं ।
तावद्व्यवर्धतेवास्यां धरण्यां पुत्रदर्शने ॥ २ ॥
न पश्यति रजोऽप्यस्य यदा रामस्य भूमिपः ।
तदार्त्तश्च विषण्णश्च पपात धरणीतले ॥ ३ ॥
दक्षिणमन्वगात् तस्य कौशल्या बाहुमङ्गना ।
वामं चास्यान्वगात् पार्श्वं कैकेयी भरतप्रिया ॥ ४ ॥
तां नयेन च संपन्नो धर्मेण विनयेन च ।
उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः ॥ ५ ॥
कैकेयि मामकाङ्गानि मा स्प्राक्षीः पापनिश्चये ।
न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवः ॥ ६ ॥
ये च त्वामनुजीवन्ति नाहं तेषां न ते मम ।
केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहं ॥ ७ ॥
अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् ।
अनुजानामि तत् सर्वमस्मिन् लोके परत्र च ॥ ८ ॥

भरतश्चेत् प्रतीतः स्याद्राज्यं प्राप्येतदव्ययं ।
यन्मे स दद्यात् पित्रर्थं मा मां तद्दत्तमागमत् ॥ ९ ॥
अथ रेणुसमुद्ध्वस्तं समुत्थाप्य नराधिपं ।
व्यवर्तत तदा देवी कौशल्या शोककर्शिता ॥ १० ॥
हत्वेव ब्राह्मणं कामात् स्पृष्ट्वाग्निमिव पाणिना ।
अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य तापसं ॥ ११ ॥
निवृत्यैव निवृत्यैव सीदतो रथवर्त्मसु ।
राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२ ॥
विललाप स दुःखार्त्तः प्रियं पुत्रमनुस्मरन् ।
नगरान्तमनुप्राप्तं बुद्ध्वा पुत्रमथाब्रवीत् ॥ १३ ॥
इमानि हयमुख्यानां वहतां तं ममात्मजं ।
पदानि पथि दृश्यन्ते स महात्मा न दृश्यते ॥ १४ ॥
यः सुखेषूपधानेषु शेते चन्दनरूषितः ।
वीज्यमानो महार्हाभिः स्त्रीभिर्मम सुतोत्तमः ॥ १५ ॥
स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः ।
काष्ठं वा यदि वाश्मानमुपधाय शयिष्यते ॥ १६ ॥
उत्थास्यति च मेदिन्याः कृपणः पांशुगुण्ठितः ।
विनिःश्वसन् प्रस्रवणात् करेणूनामिवर्षभः ॥ १७ ॥
द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः ।
राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥

सा नूनं जनकस्येष्टा सुता सुखसदोचिता ।
कण्टकाक्रमणक्लान्ता वनमद्य गमिष्यति ॥ १९ ॥
अनभिज्ञा वनानां सा नूनं भयमुपैष्यति ।
श्वापदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणं ॥ २० ॥
सकामा भव कैकेयि विधवा राज्यमावस ।
न हि तं पुरुषव्याघ्रं विना जीवितुमुत्सहे ॥ २१ ॥
इत्येवं विलपन् राजा जनौघेनाभिसंवृतः ।
अपस्नात इवारिष्टं प्रविवेश गृहोत्तमं ॥ २२ ॥
शून्यचत्वरवेश्मान्तां संवृतायनदेवतां ।
क्लान्तदुर्बलदुःखार्तां नात्याकीर्णमहापथां ॥ २३ ॥
तामवेक्ष्य पुरीं सर्वां राममेवानुचिन्तयन् ।
विलपन् प्राविशद्राजा गृहं सूर्य इवाम्बुदं ॥ २४ ॥
महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगं ।
रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २५ ॥
अथ गद्गदशब्दस्तु विलपन् वसुधाधिपः ।
उवाच मृदुमन्दार्थं वचनं दीनमस्वरं ॥ २६ ॥
कौशल्याया गृहं शीघ्रं राममातुर्नयन्तु मां ।
न ह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ॥ २७ ॥
इति ब्रुवन्तं राजानमनयन् द्वारदर्शिनः ।
कौशल्याया गृहं तत्र न्यवेशयत विनीतवत् ॥ २८ ॥

ततस्तत्र प्रविष्टस्य कौशल्याया निवेशनं ।
अधिरुह्यापि शयनं बभूव लुलितं मनः ॥ २९ ॥
तत्र स्म राजा शोकार्त्तो भुजावुद्यम्य दुःखितः ।
उच्चैश्चुक्रोश करुणं हा राम प्रजहासि मां ॥ ३० ॥
सुखिता वत तं कालं जीविष्यन्ति नरोत्तमाः ।
प्रतिश्रवान्ते ये रामं द्रक्ष्यन्ति पुनरागतं ॥ ३१ ॥
अथ रात्र्यां प्रपन्नायां कालरात्र्यामिवात्मनः ।
अर्द्धरात्रे दशरथः कौशल्यामिदमब्रवीत् ॥ ३२ ॥
न त्वां पश्यामि कौशल्ये साधु मां पाणिना स्पृश ।
रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते ॥ ३३ ॥

इत्ययोध्याकाण्डे दशरथविलापो नाम द्विचत्वारिंशः सर्गः
॥ ४२ ॥

## CAPUT XLIII.

### Causalyae querela.

ततः समीक्ष्य शयने सन्नं शोकेन कर्शितं ।
कौशल्या पुत्रशोकार्त्ता तमुवाच महीपतिं ॥ १ ॥
राघवे नरशार्दूले विषं क्षिप्त्वाहिजिह्मतां ।
विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २ ॥
विवास्य रामं सुभगा लब्धकामा समाहिता ।
त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥
अथास्मिन् नगरे रामश्चरन् भैक्ष्यं गृहे वसेत् ।
कामकाराद्वरं दातुमपि दासं ममात्मजं ॥ ४ ॥
पातयित्वा तु कैकेय्या रामं स्थानाद्यथेष्टतः ।
प्रविद्धो रक्षसां भागः पर्वणीवाहिताग्निना ॥ ५ ॥
नागराजगतिर्वीरो महाबाहुर्धनुर्धरः ।
वनमाविशते नूनं सभार्यः सहलक्ष्मणः ॥ ६ ॥
वने त्वदृष्टदुःखानां कैकेय्यनुमते त्वया ।
त्यक्तानां वनवासाय का न्ववस्था भविष्यति ॥ ७ ॥
ते रत्नहीनास्तरुणाः फलकाले विवासिताः ।
कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८ ॥

अपीदानीं स कालः स्यान्मम शोकक्षयः शिवः ।
सभार्यं यत् सह भ्रात्रा पश्येयमिह राघवं ॥ ९ ॥
सुनिवृत्तवनवासं तं कदायोध्या भविष्यति ।
यशस्विनी हृष्टजना सूच्छ्रितध्वजमालिनी ॥ १० ॥
कदा प्रेक्ष्य नरव्याघ्रावरण्यात् पुनरागतौ ।
नन्दिष्यति पुरी रम्या समुद्र इव पर्वणि ॥ ११ ॥
कदायोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति ।
पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥ १२ ॥
कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ ।
लाजैरवकरिष्यन्ति प्रविशन्तावरिंदमौ ॥ १३ ॥
कदा सुमनसः कन्या द्विजातीनां फलानि च ।
प्रदिशन्त्यः पुरीं हृष्टाः करिष्यन्ति प्रदक्षिणं ॥ १४ ॥
कदा परिणतो बुद्ध्या वयसा चामरप्रभः ।
अभ्युपैष्यति धर्मात्मा त्रिवर्ष इव लालयन् ॥ १५ ॥
निःसंशयं मया मन्ये पुरा वीर कदर्यया ।
पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः ॥ १६ ॥
साहं गौरिव सिंहेन विवत्सा वत्सला कृता ।
कैकेय्या पुरुषव्याघ्र बलवत्येव दौर्बल्यात् ॥ १७ ॥
न हि तावद्गुणैर्जुष्टं सर्वशास्त्रविशारदं ।
एकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ॥ १८ ॥

न हि मे जीविते किंचित् सामर्थ्यमिह कल्प्यते ।
अपश्यन्त्याः प्रियं पुत्रं लक्ष्मणं च महाबलं ॥ १९ ॥
अयं हि मां तापयते समुत्थितः ।
तनूजशोकप्रभवो हुताशनः ।
महीमिमां रश्मिभिरुद्धतप्रभो ।
यथा निदाघे भगवान् दिवाकरः ॥ २० ॥

इत्ययोध्याकाण्डे कौशल्याविलापो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## CAPUT XLIV.

### SUMITRAE SERMO.

विलपन्तीं तथा तां तु कौशल्यां प्रमदोत्तमां ।
इदं धर्मे स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ॥ १ ॥
तवार्ये सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः ।
किं ते विलपितैर्नैवं कृपणं रुदितेन च ॥ २ ॥
यस्तवार्ये गतः पुत्रस्त्यक्त्वा राज्यं महाबलः ।
साधु कुर्वन् महात्मानं पितरं सत्यवादिनं ॥ ३ ॥

शिष्टैराचरिते सम्यक् शश्वत् प्रेत्य फलोदये ।
रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदाचन ॥ ४ ॥
वर्त्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदानघः ।
दयावान् सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५ ॥
अरण्यवासे यद्दुःखं जानती वै सुखोचिता ।
अनुगच्छति वैदेही धर्मात्मानं तवात्मजं ॥ ६ ॥
कीर्त्तिभूतां पताकां यो लोके भ्रामयिता प्रभुः ।
दमसत्यव्रतपरः किं न प्राप्तस्तवात्मजः ॥ ७ ॥
व्यक्तं रामस्य विज्ञाय शौचं माहात्म्यमुत्तमं ।
न गात्रमंशुभिः सूर्यः संतापयितुमर्हति ॥ ८ ॥
शिवः सर्वेषु कालेषु काननेभ्यो विनिःसृतः ।
राघवं युक्तशीतोष्णः सेविष्यति सुखोऽनिलः ॥ ९ ॥
शयानमनघं रात्रौ पितेवाभिपरिष्वजन् ।
रश्मिभिः संस्पृशन् शीतैश्चन्द्रमा ह्लादयिष्यति ॥ १० ॥
ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसे ।
दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ॥ ११ ॥
स शूरः पुरुषव्याघ्रः स्वबाहुबलमाश्रितः ।
असंत्रस्तो ह्यरण्येऽसौ वेश्मनीव निवत्स्यते ॥ १२ ॥
यस्येषुपथमासाद्य विनाशं यान्ति शत्रवः ।
कथं न पृथिवी तस्य शासने स्यातुमर्हति ॥ १३ ॥

या श्रीः शौर्यं च रामस्य या च कल्याणसत्त्वता ।
निवृत्तारण्यवासः स क्षिप्रं राज्यमवाप्स्यति ॥ १४ ॥
पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः ।
क्षिप्रं तिसृभिरेताभिः सह रामोऽभिषेक्ष्यते ॥ १५ ॥
दुःखजं विसृजत्यश्रु निष्क्रामन्तमुदीक्ष्य यं ।
अयोध्यायां जनः सर्वः शोकवेगसमाहतः ॥ १६ ॥
कुशचीरधरं वीरं गच्छन्तमपराजितं ।
सीतेवानुगता लक्ष्मीस्तस्य किं नाम दुर्लभं ॥ १७ ॥
धनुर्ग्रहवरो यस्य बाणखड्गास्त्रभृत् स्वयं ।
लक्ष्मणो व्रजति ह्यग्रे तस्य किं नाम दुर्लभं ॥ १८ ॥
निवृत्तवनवासं तं द्रष्टासि पुनरागतं ।
जहि शोकं च मोहं च देवि सत्यं ब्रवीमि ते ॥ १९ ॥
शिरसा चरणावेतौ वन्दमानमनिन्दिते ।
पुनर्द्रक्ष्यसि कल्याणि पुत्रं चन्द्रमिवोदितं ॥ २० ॥
पुनः प्रविष्टं दृष्ट्वा तमभिषिक्तं महाश्रियं ।
समुत्स्रक्ष्यसि नेत्राभ्यां शीघ्रमानन्दजं जलं ॥ २१ ॥
त्वया शेषो जनश्चायं समाश्वास्यो यतोऽनघे ।
किमिदानीमिदं देवि करोषि हृदि विक्लवं ॥ २२ ॥
अभिवाद्य नमस्यन्तं शूरं ससुहृदं सुतं ।
मुदास्रैः प्रोक्ष्यसि पुनर्मेघराजिरिवाचलं ॥ २३ ॥

आश्वासयन्ती विविधैश्च वाक्यैर्-।
वाक्योपचारे कुशलानवद्या ।
रामस्य तां मातरमेवमुक्त्वा ।
देवी सुमित्रा विरराम रामा ॥ २४ ॥
निशम्य तल्लक्ष्मणमातृवाक्यं ।
रामस्य मातुर्नरदेवपत्न्याः ।
शनैः शरीरे विननाश शोकः ।
शरद्गतो मेघ इवाल्पतोयः ॥ २५ ॥

इत्ययोध्याकाण्डे सुमित्रावाक्यं नाम चतुश्चत्वारिंशः सर्गः
॥ ४४ ॥

---

## CAPUT XLV.

### Adventus ad Tamasam amnem.

अनुरक्ता महात्मानं रामं सत्यपराक्रमं ।
अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः ॥ १ ॥
निवर्तितेऽपि च बलात् सुहृद्वर्गेण राजनि ।
नैव ते संन्यवर्तन्त रामस्यानुगता रथं ॥ २ ॥
अयोध्यानिलयानां हि पुरुषाणां महायशाः ।
बभूव गुणसंपन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥

याच्यमानोऽपि काकुत्स्थः स्वाभिः प्रकृतिभिस्तदा ।
कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत ॥ ४ ॥
अवेक्षमाणः स स्नेहं चक्षुषा प्रपिबन्निव ।
उवाच रामो धर्मात्मा ताः प्रजाः स्वा इव प्रजाः ॥ ५ ॥
या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनां ।
मत्प्रियार्थमशेषेण भरते सा विधीयतां ॥ ६ ॥
स हि कल्याणचारित्रः कैकेय्यानन्दवर्धनः ।
करिष्यति यथावद्वः प्रियाणि च हितानि च ॥ ७ ॥
ज्ञानवृद्धो वयोबालो मृदुर्वीर्यगुणान्वितः ।
अनुरूपः स वो भर्ता भविष्यति भयापहः ॥ ८ ॥
स हि राजगुणैर्युक्तो युवराजः समीक्षितः ।
अपि चापि मया शिष्टैः कार्यं वो भर्तृशासनं ॥ ९ ॥
न संतप्येद्यथा चासौ वनवासं गते मयि ।
महाराजस्तथा कार्यो मम प्रियचिकीर्षया ॥ १० ॥
यथा यथा दाशरथिर्धर्ममेवास्थितोऽभवत् ।
तथा तथा प्रकृतयो रामं पतिमकामयन् ॥ ११ ॥
बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह ।
चकर्षेव गुणैर्बद्धं जनं पुरनिवासिनं ॥ १२ ॥
ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा ।
वयःप्रकम्पशिरसो दूरादूचुरिदं वचः ॥ १३ ॥

वहन्तो जवना रामं भो भो जात्यास्तुरंगमाः ।
निवर्तध्वं न गन्तव्यं हिता भवत भर्तरि ॥ १४ ॥
कर्णवन्ति हि भूतानि विशेषेण तुरंगमाः ।
यूयं तस्मान्निवर्तध्वं याचनां प्रतिवेदिताः ॥ १५ ॥
धर्मतः स विशुद्धात्मा वीरः शुभदृढव्रतः ।
उपवाह्यस्तु वो भर्ता नापवाह्यः पुराद्वनं ॥ १६ ॥
एवमार्तप्रलापांस्तान् वृद्धान् प्रलपतो द्विजान् ।
अवेक्ष्य सहसा रामो रथादवततार ह ॥ १७ ॥
पद्भ्यामेव जगामाथ ससीतः सहलक्ष्मणः ।
संनिकृष्टपदन्यासो रामो वनपरायणः ॥ १८ ॥
द्विजातीन् हि पदातींस्तान् रामश्चारित्रवत्सलः ।
न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९ ॥
गच्छन्तमेव तं दृष्ट्वा वनं संभ्रान्तमानसाः ।
ऊचुः परमसंतप्ता रामं वाक्यमिदं द्विजाः ॥ २० ॥
ब्राह्मण्यं कृत्स्नमेव त्वां ब्रह्मण्यमनुगच्छति ।
द्विजस्कन्धाधिरूढास्त्वामग्नयो ऽप्यनुयान्त्यमी ॥ २१ ॥
वाजपेयसमुत्थानि छत्राण्येतानि पश्य नः ।
पृष्ठतो ऽनुप्रयातानि मेघानिव जलात्यये ॥ २२ ॥
अनवाप्तातपत्रस्य रश्मिसंतापितस्य ते ।
एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयकैः ॥ २३ ॥

या हि नः सततं बुद्धिर्वेदमन्त्रानुसारिणी ।
त्वत्कृते सा कृता वत्स वनवासानुसारिणी ॥ २४ ॥
हृदयेष्विव तिष्ठन्ते वेदा ये नः परं धनं ।
वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ २५ ॥
न पुनर्निश्चयः कार्यस्त्वद्गतौ सुकृता मतिः ।
त्वयि धर्मव्यपेक्षे तु किं स्याद्धर्मपथे स्थितं ॥ २६ ॥
याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः ।
शिरोभिर्निभृताचार महीपतनपांशुलैः ॥ २७ ॥
बहूनां वितता यज्ञा द्विजानां य इहागताः ।
तेषां समाप्तिरायत्ता तव वत्स निवर्तने ॥ २८ ॥
भक्तिमन्तीह भूतानि जङ्गमानीतराणि च ।
याचमानेषु तेषु त्वं भक्तिं भक्तेषु दर्शय ॥ २९ ॥
अनुगन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः ।
उन्नता वायुवेगेन विक्रोशन्तीव पादपाः ॥ ३० ॥
निश्चेष्टाहारसंचारा वृक्षैकस्थानविष्ठिताः ।
पक्षिणो ऽपि प्रयाचन्ते सर्वभूतानुकम्पनं ॥ ३१ ॥
एवं विक्रोशतां तेषां द्विजातीनां निवर्तने ।
ददृशे तमसा तत्र वारयन्तीव राघवं ॥ ३२ ॥
ततः सुमन्त्रो ऽपि रथाद्विमुच्य ।
श्रान्तान् हयान् संपरिवर्त्य शीघ्रं ।

पीतोदकांस्तोयपरिप्लुताङ्गान् ।
अचारयद्वै तमसाविदूरं ॥ ३३ ॥

इत्ययोध्याकाण्डे तमसादर्शनं नाम पञ्चचत्वारिंशः सर्गः
॥ ४५ ॥

---

## CAPUT XLVI.

### Commoratio ad Tamasae ripam.

ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ।
सीतामुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥
इयमद्य निशा पूर्वा सौमित्रे प्रहिता वयं ।
वनवासाय भद्रं ते स नोत्कण्ठितुमर्हसि ॥ २ ॥
पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः ।
यथानिलयमायद्भिर्निलीनानि मृगद्विजैः ॥ ३ ॥
अद्यायोध्या तु नगरी राजधानी पितुर्मम ।
सस्त्रीपुंसा गतानस्मान् शोचिष्यति न संशयः ॥ ४ ॥
अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः ।
त्वां च मां च नरव्याघ्र शत्रुघ्नभरतौ तथा ॥ ५ ॥
पितरं त्वनुशोचामि मातरं च यशस्विनीं ।
अपि नान्धौ भवेतां नौ रुदन्तौ तावभीक्ष्णशः ॥ ६ ॥

भरतः खलु धर्मात्मा पितरं मातरं च मे ।
धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥
भरतस्यानृशंसत्वं संचिन्त्याहं पुनः पुनः ।
नानुशोचामि पितरं मातरं चापि लक्ष्मण ॥ ८ ॥
त्वया कार्यं नरव्याघ्र मामनुव्रजता कृतं ।
अन्वेष्टव्या हि वैदेह्या रक्षणार्थं सहायता ॥ ९ ॥
अद्भिरेव तु सौमित्रे वत्स्याम्यत्र निशामिमां ।
एतद्धि रोचते मह्यं वन्ये ऽपि विविधे सति ॥ १० ॥
एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः ।
अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥
सो ऽश्वान् सुमन्त्रः संयम्य सूर्ये ऽस्तं समुपागते ।
प्रभूतयवसान् कृत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥
उपास्य तु शिवां संध्यां दृष्ट्वा रात्रिमुपस्थितां ।
रामस्य शयनं चक्रे सूतः सौमित्रिणा सह ॥ १३ ॥
तां शय्यां तमसातीरे वृक्षदलैः कृतां तदा ।
रामः सौमित्रिमामन्त्र्य सभार्यः संविवेश ह ॥ १४ ॥
सभार्यं संप्रसुप्तं तु भ्रातरं प्रेक्ष्य लक्ष्मणः ।
कथयामास सूताय रामस्य विविधान् गुणान् ॥ १५ ॥
जाग्रतो ह्येव तां रात्रिं सौमित्रेरुदितो रविः ।
सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६ ॥

गोकुलाकुलतीरायास्तमसाया ऽविदूरतः ।
अवसत् तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १७ ॥
उत्थाय तु महातेजाः प्रकृतीस्ता निशाम्य च ।
अब्रवीद्भातरं रामो लक्ष्मणं पुण्यलक्षणं ॥ १८ ॥
अस्मद्व्यपेक्षान् सौमित्रे निर्व्यपेक्षान् गृहेष्विमान् ।
वृक्षमूलेषु संसुप्तान् पश्य लक्ष्मण सांप्रतं ॥ १९ ॥
यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्तने ।
अपि प्राणान् न्यसिष्यन्ति न तु त्यक्ष्यन्ति निश्चयं ॥ २० ॥
यावदेव तु संसुप्तास्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पन्थानमकुतोभयं ॥ २१ ॥
अतो भूयो ऽपि नेदानीमिक्ष्वाकुपुरवासिनः ।
स्वपेयुरनुरक्ता मां वृक्षमूलेषु संश्रिताः ॥ २२ ॥
पौरा ह्यात्मकृताद्दुःखाद्विप्रमोच्या नृपात्मजैः ।
न तु खल्वात्मना योज्या दुःखेन पुरवासिनः ॥ २३ ॥
अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितं ।
रोचते मे तथा प्राज्ञ क्षिप्रमारुह्यतामिति ॥ २४ ॥
अथ रामो ऽब्रवीत् सूतं सुमन्त्र युज्यतां रथः ।
गमिष्यामि ततो ऽरण्यं गच्छ शीघ्रमितः प्रभो ॥ २५ ॥
सूतस्ततः संत्वरितः स्यन्दनं तैर्हयोत्तमैः ।
योजयित्वा तु रामस्य प्राञ्जलिः प्रत्यवेदयत् ॥ २६ ॥

अयं युक्तो महाबाहो रथस्ते रथिनां वर ।
त्वरयारोह भद्रं ते ससीतः सहलक्ष्मणः ॥ २७ ॥
तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः ।
शीघ्रगामाकुलावर्तां तमसामतरन्नदीं ॥ २८ ॥
स संतीर्य महाबाहुः श्रीमान् शिवमकण्टकं ।
प्रापद्यत महामार्गमभयं भयदर्शिनां ॥ २९ ॥
मोहनार्थं तु पौराणां सूतं रामोऽब्रवीद्वचः ।
उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥ ३० ॥
मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः ।
यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ ३१ ॥
रामस्य तु वचः श्रुत्वा तथा चक्रे च सारथिः ।
प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२ ॥
तौ संप्रयुक्तं तु रथं समास्थितौ ।
तदा ससीतौ रघुवंशवर्धनौ ।
प्रचोदयामास ततस्तुरंगमान् ।
स सारथिर्येन पथा तपोवनं ॥ ३३ ॥

इत्ययोध्याकाण्डे तमसातीरनिवासो नाम षट्चत्वारिंशः
सर्गः ॥ ४६ ॥

## CAPUT XLVII.

### CIVIUM REDITUS.

प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना ।
शोकोपहतनिश्चेष्टा बभूवुर्हतचेतसः ॥ १ ॥
शोकजाश्रुपरिद्यूना वीक्षमाणास्ततस्ततः ।
आलोकमपि रामस्य न पश्यन्ति स्म दुःखिताः ॥ २ ॥
ते विषादार्त्तवदना रहितास्तेन धीमता ।
कृपणाः करुणा वाचो वदन्ति स्म मनीषिणः ॥ ३ ॥
धिगस्तु खलु निद्रां तां ययापहृतचेतनाः ।
नाद्य पश्यामहे रामं पृथूरस्कं महाभुजं ॥ ४ ॥
कथं रामो महाबाहुः स तथा वितथक्रियः ।
भक्तं जनमभिप्रेत्य प्रवासं तपसो गतः ॥ ५ ॥
यो नः सदा लालयति पिता पुत्रानिवौरसान् ।
कथं रघूणां स श्रेष्ठस्त्यक्त्वा नो विपिनं गतः ॥ ६ ॥
इहैव निधनं यामो महाप्रस्थानमेव वा
रामेण रहितानां हि किमर्थं जीवितं हि नः ॥ ७ ॥
सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च ।
ते प्रज्वाल्य चितां सर्वे प्रविशामोऽथ पावकं ॥ ८ ॥

किं वक्ष्यामो महाबाहुरनसूयः प्रियंवदः ।
नीतः स राघवोऽस्माभिरिति वक्तुं कथं क्षमं ॥ ९ ॥
सा नूनं नगरी दीना दृष्ट्वास्मान् राघवं विना ।
भविष्यति निरानन्दा सस्त्रीबालवयोऽधिका ॥ १० ॥
निर्यातास्तेन वीरेण सह नित्यं महात्मना ।
विहीनास्तेन च पुनः कथं द्रक्ष्याम तां पुरीं ॥ ११ ॥
इतीव बहुधा वाचो बाहूनुद्यम्य ते जनाः ।
विलपन्ति स्म दुःखार्त्ता विवत्सा इव धेनवः ॥ १२ ॥
ततो मार्गानुसारेण गत्वा किंचित् ततः क्षणं ।
मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥
रथस्य मार्गनाशेन न्यवर्तन्त मनस्विनः ।
किमिदं किं करिष्यामो दैवेनोपहता इति ॥ १४ ॥
तदा यथागतेनैव मार्गेण क्लान्तचेतसः ।
अयोध्यामगमन् सर्वे पुरीं व्यथितसज्जनां ॥ १५ ॥
आलोक्य नगरीं तां च क्षयव्याकुलमानसाः ।
आवर्तयन्त तेऽश्रूणि नयनैः शोकपीडितैः ॥ १६ ॥
सैव रामेण नगरी रहिता नातिशोभते ।
आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥ १७ ॥
चन्द्रहीनमिवाकाशं तोयहीनमिवार्णवं ।
अपश्यन् निहतानन्दं नगरं ते विचेतसः ॥ १८ ॥

ते तानि वेश्मानि महाधनानि ।
दुःखेन दुःखोपहता विशन्ति ।
नैव प्रजज्ञुः स्वजनं परं वा ।
निरीक्षमाणाः प्रवणप्रहर्षाः ॥ १९ ॥

इत्ययोध्याकाण्डे पौरनिवर्तनं नाम सप्तचत्वारिंशः सर्गः
॥ ४७ ॥

---

## CAPUT XLVIII.

### MULIERUM URBANARUM QUERELA.

अनुगम्य निवृत्तानां रामं नगरवासिनां ।
उद्गतानीव सत्वानि बभूवुरमनस्विनां ॥ १ ॥
स्वं स्वं निलयमागम्य पुत्रदारैः समावृताः ।
अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ॥ २ ॥
न चाहृष्यन् न चामोदन् वणिजो न प्रसारयन् ।
न चाशोभन्त पण्यानि नापचन् गृहमेधिनः ॥ ३ ॥
लब्धं दृष्ट्वा नाभ्यनन्दन् विपुलं वा धनागमं ।
पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ ४ ॥

गृहे गृहे रुदत्यश्च भर्तारं गृहमागतं ।
व्यगर्हयन्त दुःखार्त्ता वाग्भिस्तोत्त्रैरिव द्विपान् ॥ ५ ॥
किं नु तेषां गृहैः कार्यं किं दारैः किं धनेन वा ।
पुत्रैर्वा किं सुखैर्वापि ये न पश्यन्ति राघवं ॥ ६ ॥
एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया ।
यो ऽनुगच्छति काकुत्स्थं रामं परिचरन् वने ॥ ७ ॥
आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च ।
येषु यास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥ ८ ॥
शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकाननाः ।
आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ ९ ॥
काननं वापि शैलं वा यं रामो ऽनुगमिष्यति ।
प्रियातिथिमिव प्राप्तं नैनं शक्ष्यत्यनर्चितुं ॥ १० ॥
विचित्रकुसुमापीडा बहुमञ्जरिधारिणः ।
पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवं ॥ ११ ॥
अकाले चापि मुख्यानि मूलानि च फलानि च ।
दर्शयिष्यन्ति सानूनि गिरीणां राममागतं ॥ १२ ॥
प्रस्रविष्यन्ति तोयानि विमलानि महीधराः ।
विदर्शयन्तो विविधान् भूयश्चित्रांश्च निर्झरान् ॥ १३ ॥
यत्र रामो ऽभयं तत्र नास्ति तत्र पराभवः ।
स हि नाथो ऽस्य जगतः स गतिः स परायणं ॥ १४ ॥

पुरा भवति नो दूरादनुगच्छाम राघवं ।
पादच्छाया सुखोदर्का तादृशस्य महात्मनः ॥ १५ ॥
वयं परिचरिष्यामः सीतां यूयं च राघवं ।
इति पौरस्त्रियो भर्तॄन् दुःखार्तास्तत् तदब्रुवन् ॥ १६ ॥
युष्माकं राघवो ऽरण्ये योगक्षेमं विधास्यति ।
सीता नारीजनस्यास्य योगक्षेमं करिष्यति ॥ १७ ॥
को न्वनेनाप्रतीतेन सोत्कण्ठितजनेन च ।
संप्रीयेतामनोज्ञेन वासेन हृतचेतसा ॥ १८ ॥
कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत् ।
न हि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥ १९ ॥
यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात् ।
कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥ २० ॥
कैकेय्या न वयं राज्ये भृतका हि वसेमहि ।
जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥ २१ ॥
उपद्रुतमिदं सर्वमनालम्बमनायकं ।
कैकेय्यास्तु कृते क्षिप्रं विनाशमुपयास्यति ॥ २२ ॥
न हि प्रव्रजिते रामे जीविष्यति महीपतिः ।
मृते दशरथे व्यक्तं विलापस्तदनन्तरं ॥ २३ ॥
ते विषं पिबतालोड्य क्षीणपुण्याः सुदुःखिताः ।
राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत ॥ २४ ॥

मिथ्या प्रव्रजितो रामः सभार्यः सहलक्ष्मणः ।
भरते संनिबद्धाः स्म शौनिके पशवो यथा ॥ २५ ॥
इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवं ।
जगामास्तं दिनकरो रजनी चाभ्यवर्तत ॥ २६ ॥
नष्टज्वलनसंपाता प्रशान्ताध्यायसत्कथा ।
तिमिरेणानुलिप्तेव तदा सा नगरी बभौ ॥ २७ ॥

तथा स्त्रियो रामनिमित्तमातुरा ।
यथा सुते भ्रातरि वा विवासिते ।
विलप्य दीना रुरुदुर्विचेतसः ।
सुतैर्हि तासामधिको ऽपि सो ऽभवत् ॥ २८ ॥
प्रशान्तगीतोत्सवनृत्यवादना ।
विभ्रष्टहर्षा पिहितापणोदया ।
तदा ह्ययोध्या नगरी बभूव सा ।
महार्णवः संक्षपितोदको यथा ॥ २९ ॥

इत्ययोध्याकाण्डे नागरस्त्रीविलापो नाम अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## CAPUT XLIX.

### Fluminum traiectus.

रामोऽपि रात्रिशेषेण तेनैव महदन्तरं ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥
तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा ।
उपास्य तु शिवां संध्यां विषयान्तं व्यगाहत ॥ २ ॥
ग्रामान् विकृष्टसीमान्तान् पुष्पितानि वनानि च ।
पश्यन्नतिययौ शीघ्रं शरैरिव हयोत्तमैः ॥ ३ ॥
शृण्वन् वाचो मनुष्याणां ग्रामसंवासवासिनां ।
राजानं धिग्दशरथं कामस्य वशमास्थितं ॥ ४ ॥
धिङ् नृशंसां च कैकेयीं पापां पापानुवर्त्तिनीं ।
तीक्ष्णां संभिन्नमर्यादां क्रूरकर्मानुसेविनीं ॥ ५ ॥
या पुत्रमीदृशं राज्ञः प्रवासयति धार्मिकं ।
वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियं ॥ ६ ॥
अहो दशरथो राजा निःस्नेहः स्वसुतं प्रति ।
प्रजानामनघं रामं परित्यक्तुमिहेच्छति ॥ ७ ॥
एता वाचो मनुष्याणां ग्रामसंवासवासिनां ।
शृण्वन्नतिययौ वीरः कोशलान् कोशलेश्वरः ॥ ८ ॥

ततो वेदश्रुतिं नाम शिववारिवहां नदीं ।
उत्तीर्याभिमुखः प्रायादगस्त्याध्युषितां दिशं ॥ ९ ॥
गत्वा तु सुचिरं कालं ततः शीतवहां नदीं ।
गोमतीं गोयुतानूपामतरत् सागरंगमां ॥ १० ॥
गोमतीं चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः ।
मयूरहंसाभिरुतां ततार स्यन्दिकां नदीं ॥ ११ ॥
स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा ।
स्फीतां राष्ट्रावृतां रामो वैदेहीमन्वदर्शयत् ॥ १२ ॥
सूत इत्येव चाभाष्य सारथिं तमभीक्ष्णशः ।
मत्तहंसस्वरः श्रीमानुवाच पुरुषोत्तमः ॥ १३ ॥
कदाहं पुनरागम्य सरय्वाः पुष्पिते वने ।
मृगयां पर्यटिष्यामि मात्रा पित्रा च संगतः ॥ १४ ॥
अत्यर्थमभिकाङ्क्षामि मृगयां सरयूवने ।
रतिर्ह्येषातुला लोके राजर्षिगणसंमता ॥ १५ ॥
स तमध्वानमैक्ष्वाकः सूतं मधुरया गिरा ।
तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् ॥ १६ ॥

इत्ययोध्याकाण्डे नदीतरणं नाम नवचत्वारिंशः सर्गः
॥ ४९ ॥

## CAPUT L.

### COMMORATIO SUB INGUDE ARBORE.

विशालान् कोशलान् यात्वा रम्यान् लक्ष्मणपूर्वजः ।
अयोध्याभिमुखो धीमान् प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥
आपृच्छे त्वां पुरि श्रेष्ठे काकुत्स्थपरिपालिते ।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥ २ ॥
निवृत्तवनवासस्त्वामनृणो जगतीपतेः ।
पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह संगतः ॥ ३ ॥
ततो रुधिरताम्राक्षो भुजमुद्यम्य दक्षिणं ।
अश्रुपूर्णमुखो दीनो ऽब्रवीज्जानपदं जनं ॥ ४ ॥
अनुक्रोशो दया चैव यथार्हं मयि वः कृतः ।
निवर्तध्वं महाभागा गम्यतामर्थसिद्धये ॥ ५ ॥
ते ऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणं ।
विलपन्तो नरा घोरं व्यतिष्ठन्त क्वचित् क्वचित् ॥ ६ ॥
तथा विलपतां तेषामतृप्तानां च राघवः ।
अचक्षुर्विषयं प्रायाद्यथार्कः क्षणदामुखे ॥ ७ ॥

ततो धान्यधनोपेतान् दानशीलजनान् शिवान् ।
अकुतश्चिद्भयान् रम्यांश्चैत्ययूपसमावृतान् ॥ ८ ॥
उद्यानाम्रवणोपेतान् संपन्नसलिलाशयान् ।
तुष्टपुष्टजनाकीर्णान् गोकुलाकुलमण्डितान् ॥ ९ ॥
रक्षणीयान् नरेन्द्राणां ब्रह्मघोषाभिनादितान् ।
रथेन पुरुषव्याघ्रः कोशलानत्यवर्तत ॥ १० ॥
तत्र त्रिपथगां दिव्यां शीततोयामशैवलां ।
ददर्श राघवो गङ्गां रम्यामृषिनिषेवितां ॥ ११ ॥
तामूर्मिकलिलावर्तामन्ववेक्ष्य महारथः ।
सुमन्त्रमब्रवीत् सूतमिहैवाद्य वसामहे ॥ १२ ॥
अविदूरादयं नद्या बहुपुष्पप्रवालवान् ।
सुमहानिंगुदीवृक्षो वसामोऽत्रैव सारथे ॥ १३ ॥
प्रेक्षामि सरितां श्रेष्ठां संमान्यसलिलां शिवां ।
देवदानवगन्धर्वमृगपन्नगपक्षिणां ॥ १४ ॥
लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवं ।
उक्त्वा तमिंगुदीवृक्षं तदोपययतुर्हयैः ॥ १५ ॥
रामोऽभियाय तं रम्यं वृक्षमिक्ष्वाकुनन्दनः ।
रथादवातरत् तस्मात् सभार्यः सहलक्ष्मणः ॥ १६ ॥
सुमन्त्रोऽप्यवतीर्याथ मोचयित्वा हयोत्तमान् ।
वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः ॥ १७ ॥

तत्र राजा गुहो नाम रामस्यात्मसमः सखा ।
निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः ॥ १८ ॥
स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतं ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागमत् ॥ १९ ॥
ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितं ।
सह सौमित्रिणा रामः समगच्छद्गुहेन सः ॥ २० ॥
तमार्त्तः संपरिष्वज्य नत्वा तत्पादपङ्कजं ।
करौ निधाय शिरसा गुहो राघवमब्रवीत् ॥ २१ ॥
यथायोध्या तथेदं ते राम किं करवाणि ते ।
ईदृशं हि महाबाहो कः प्राप्स्यत्यतिथिं प्रियं ॥ २२ ॥
ततो गुणवदन्नाद्यमुपादाय पृथग्विधं ।
अर्घ्यं चोपनयच्छीघ्रं वाक्यं चेदमुवाच ह ॥ २३ ॥
स्वागतं ते महाबाहो तवेयमखिला मही ।
वयं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधि नः ॥ २४ ॥
भक्ष्यं भोज्यं च पेयं च लेह्यं चैतदुपस्थितं ।
शयनानि च मुख्यानि वाजिनां खादनं च यत् ॥ २५ ॥
गुहमेवं ब्रुवाणं तु राघवः प्रत्युवाच ह ।
अर्चिताश्चैव हृष्टाश्च भवता सर्वदा वयं ॥ २६ ॥
पद्भ्यामभिगतं चैनं स्नेहसंदर्शनेन च ।
भुजाभ्यां साधुवृत्ताभ्यां पीडयन् वाक्यमब्रवीत् ॥ २७ ॥

दिष्ट्या त्वां गुह पश्यामि ह्यरोगं सह बान्धवैः ।
अपि ते कुशलं राष्ट्रे मित्रेषु च धनेषु च ॥ २८ ॥
यत् त्विदं भवता किंचित् प्रीत्या समुपकल्पितं ।
सर्वं तदनुजानामि न हि वर्ते प्रतिग्रहे ॥ २९ ॥
कुशचीराजिनधरं फलमूलाशनं च मां ।
विद्धि प्रणिहितं धर्मे तापसं वनगोचरं ॥ ३० ॥
अश्वानां खादनेनाहमर्थी नान्येन केनचित् ।
एतावतात्र भवता भविष्यामि सुपूजितः ॥ ३१ ॥
एते हि दयिता राज्ञः पितुर्दशरथस्य मे ।
एतैः सुविहितैरश्वैर्भविष्याम्यहं पूजितः ॥ ३२ ॥
अश्वानां प्रतिपानं च खादनं चैव सोऽन्वशात् ।
गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ॥ ३३ ॥
ततश्चीरोत्तरासङ्गः संध्यामन्वास्य पश्चिमां ।
जलमेवाददे रामो लक्ष्मणेनाहृतं स्वयं ॥ ३४ ॥
तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः ।
सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ॥ ३५ ॥
गुहोऽपि सह सूतेन सौमित्रिमनुभाष्य च ।
अन्वजागस्ततो राममप्रमत्तो धनुर्धरः ॥ ३६ ॥
तथा शयानस्य ततोऽस्य धीमतो ।
यशस्विनो दाशरथेर्महात्मनः ।

अदृष्टदुःखस्य सुखोचितस्य सा ।
तदा व्यतीयाय सुखेन शर्वरी ॥ २७ ॥

इत्ययोध्याकाण्डे इंगुदीवृक्षनिवासो नाम पञ्चाशः सर्गः
॥ ५० ॥

---

## CAPUT LI.

### SUMITRIDAE QUERELA.

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणं ।
निरीक्ष्य गुहः संतप्तो वाक्यमेतदुवाच ह ॥ १ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि साध्वस्यां राजपुत्र निशामिमां ॥ २ ॥
उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः ।
गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशां ॥ ३ ॥
न हि रामात् प्रियतमो ममास्ति भुवि कश्चन ।
ब्रवीम्येतदहं सत्यं वीर सत्येन ते शपे ॥ ४ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिं च विपुलामर्थकामौ च पुष्कलौ ॥ ५ ॥

सो ऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः सर्वथा ज्ञातिभिः सह ॥ ६ ॥
न मे ऽस्त्यविदितं किंचिद्वने ऽस्मिंश्चरतः सदा ।
चतुरङ्गं ह्यपि बलं सुमहत् प्रसहेमहि ॥ ७ ॥
लक्ष्मणस्तं तदोवाच रक्ष्यमाणास्त्वयानघ ।
नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ॥ ८ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ९ ॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि ।
तं पश्य सुखसंसुप्तं तृणेषु सह सीतया ॥ १० ॥
यो मन्त्रतपसा लब्धो विविधैश्च पराक्रमैः ।
एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ ११ ॥
अस्मिन् प्रव्रजिते राजा न चिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १२ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।
निर्घोषोपरतं तात मन्ये राजनिवेशनं ॥ १३ ॥
कौशल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमां ॥ १४ ॥
जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ।
तद्दुःखं यदि कौशल्या वीरसूर्विनशिष्यति ॥ १५ ॥

अनुरक्तजनाकीर्णा सुखा लोकप्रियावहा ।
राजव्यसनसंसृष्टा सा पुरी विनशिष्यति ॥ १६ ॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथं ।
राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते ।
प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति राघवं ॥ १८ ॥
अपि सत्यप्रतिज्ञेन सार्द्धं कुशलिनो वयं ।
निवृत्ते वनवासेऽस्मिन्नयोध्यां प्रविशेमहि ॥ १९ ॥
परिदेवयमानस्य दुःखार्त्तस्य महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ॥ २० ॥
तथा हि तथ्यं ब्रुवति प्रजाहिते ।
नरेन्द्रसूनौ गुरुसौहृदाद्गुहः ।
मुमोच बाष्पं व्यसनाभिपीडितो ।
ज्वरातुरो नाग इव व्यथातुरः ॥ २१ ॥

इत्ययोध्याकाण्डे सौमित्रिविलापो नाम एकपञ्चाशः
सर्गः ॥ ५१ ॥

## CAPUT LII.

### Gangis transvectio.

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणं ॥ १ ॥
भास्करोदयकालोऽयं गता भगवती निशा ।
असौ सुकृष्णो विहगः कोकिलस्तात कूजति ॥ २ ॥
बर्हिणानां च निर्घोषः श्रूयते नदतां वने ।
तराम जाह्नवीं सौम्य शीघ्रगां सागरंगमां ॥ ३ ॥
स तु रामस्य वचनं निशम्य प्रतिगृह्य च ।
स्थपतिस्तूर्णमाहूय सचिवमिदमब्रवीत् ॥ ४ ॥
अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभां ।
सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥ ५ ॥
तं निशम्य गुहादेशं गुहामात्यगणो महान् ।
उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् ॥ ६ ॥
ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत् ।
उपस्थितेयं नौर्देव भूयः किं करवाणि ते ॥ ७ ॥
तवामरसुतप्रख्य तर्तुं सागरगां नदीं ।
नौरियं पुरुषव्याघ्र शीघ्रमारोह सुव्रत ॥ ८ ॥

अथोवाच महातेजा रामो गुहमिदं वचः ।
कृतकामो ऽस्मि भवता शीघ्रमारोप्यतामिति ॥ ९ ॥
ततः कलापान् संनह्य खड्गौ बद्ध्वा च धन्विनौ ।
जग्मतुर्येन तां गङ्गां सीतया सह राघवौ ॥ १० ॥
राममेव तु धर्मज्ञमुपागम्य विनीतवत् ।
किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ ११ ॥
ततो ऽब्रवीद्दाशरथिः सुमन्त्रं ।
स्पृशन् करेणोत्तमदक्षिणेन ।
सुमन्त्र शीघ्रं पुनरेव याहि ।
राज्ञः सकाशे भव चाप्रमत्तः ॥ १२ ॥
निवर्तस्वेत्युवाचैनमेतावद्धि कृतं मम ।
रथं विहाय पद्भ्यां तु गमिष्यामो महावनं ॥ १३ ॥
आत्मानं त्वभ्यनुज्ञातमवेक्ष्यार्त्तः स सारथिः ।
सुमन्त्रः पुरुषव्याघ्रमैक्ष्वाकमिदमब्रवीत् ॥ १४ ॥
नातिक्रान्तमिदं लोके पुरुषेणेह केनचित् ।
तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ १५ ॥
न मन्ये ब्रह्मचर्ये वा स्वधीते वा फलोदयः ।
मार्दवार्जवयोर्वापि त्वां चेद्व्यसनमागतं ॥ १६ ॥
सह राघव वैदेह्या भ्रात्रा चैव वने वसन् ।
त्वं गतिं प्राप्स्यसे वीर त्रीँल्लोकान् निर्जयन्निव ॥ १७ ॥

वयं खलु हता राम यत् त्वया ह्युपवञ्चिताः ।
कैकेय्या वशमेष्यामः पापाया दुःखभागिनः ॥ १८ ॥
इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तदा ।
दृष्ट्वा दूरगतं रामं दुःखार्त्तो रुरुदे चिरं ॥ १९ ॥
ततस्तु विगते बाष्पे सूतं स्पृष्टोदकं शुचि ।
रामः सुमधुरं वाक्यं पुनः पुनरुवाच ह ॥ २० ॥
इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ।
यथा दशरथो राजा मां न शोचेत् तथा कुरु ॥ २१ ॥
शोकोपहतचेताश्च वृद्धश्च जगतीपतिः ।
कामभारावसन्नश्च तस्मादेतद्ब्रवीमि ते ॥ २२ ॥
यद्यथाज्ञापयेत् किंचित् स महात्मा महीपतिः ।
कैकेय्याः प्रियकामार्थं कार्यं तदविकाङ्क्षया ॥ २३ ॥
एतदर्थं हि राज्यानि प्रशासति नराधिपाः ।
यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ॥ २४ ॥
तद्यथा स महाराजो नालीकमधिगच्छति ।
न च ताम्यति शोकेन सुमन्त्र कुरु तत् तथा ॥ २५ ॥
अदृष्टदुःखं राजानं वृद्धमार्यं जितेन्द्रियं ।
ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २६ ॥
न चाहमनुशोचामि लक्ष्मणो न च मैथिली ।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति वा ॥ २७ ॥

चतुर्दशसु वर्षेषु निवृत्तेषु पुनः प्रभो ।
लक्ष्मणं मां च सीतां च द्रक्ष्यसि क्षिप्रमागतान् ॥ २८ ॥
एवमुक्त्वा तु राजानं मातरं च सुमन्त्र मे ।
अन्याश्च देवीः सहिताः कैकेयीं च पुनः पुनः ॥ २९ ॥
आरोग्यं ब्रूहि कौशल्यामथ पादाभिवन्दनं ।
सीतायाः सूत मम च वचनाल्लक्ष्मणस्य च ॥ ३० ॥
ब्रूयाश्चापि महाराजं भरतं शीघ्रमानय ।
आगतश्चापि भरतः स्थाप्यो नृप मते पदे ॥ ३१ ॥
भरतं हि परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्संतापजं दुःखं न त्वामभिभविष्यति ॥ ३२ ॥
भरतश्चापि वक्तव्यो यथा राजनि वर्तसे ।
तथा मातृषु वर्तेथाः सर्वास्वेवाविशेषतः ॥ ३३ ॥
तातस्य प्रियकामेन यौवराज्यमपेक्षता ।
लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुं ॥ ३४ ॥
निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः ।
तत्सर्ववचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ॥ ३५ ॥
यदहं नोपचारेण ब्रूयां स्नेहादविक्लवं ।
भक्तिमानिति तत् तावद्वाक्यं त्वं क्षन्तुमर्हसि ॥ ३६ ॥
कथं नु त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीं ।
तव तात वियोगेन पुत्रशोकातुरामिव ॥ ३७ ॥

दैन्यं हि नगरं गच्छेद्दृष्ट्वा शून्यमिमं रथं ।
मृतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥ ३८ ॥
दूरे ऽपि निवसन्तं त्वां मानसेनाग्रतः स्थितं ।
चिन्तयन्त्यो ऽद्य नूनं हि निराहाराः कृताः प्रजाः ॥ ३९ ॥
आर्त्तनादो हि यः पौरैरुन्मुक्तस्त्वत्प्रवासने ।
सरथं मां निशाम्यैकं कुर्युः शतगुणं ततः ॥ ४० ॥
अहं किं चापि वक्ष्यामि देवीं तव सुतो मया ।
नीतो ऽसौ मातुलकुलं संतापं मा कृथा इति ॥ ४१ ॥
असत्यमपि नैवाहं ब्रूयां वचनमीदृशं ।
कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४२ ॥
मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः ।
कथं रथं त्वया हीनं प्रवक्ष्यन्ति हयोत्तमाः ॥ ४३ ॥
तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृते ऽनघ ।
वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४४ ॥
यदि मे याचमानस्य त्यागमेव करिष्यसि ।
सरथो ऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४५ ॥
भविष्यन्ति वने यानि तपोविघ्नकराणि ते
रथेन प्रतिबाधिष्ये तानि सर्वाणि राघव ॥ ४६ ॥
त्वत्कृतेन मया प्राप्तं रथचर्याकृतं सुखं ।
आशंसे त्वत्कृतेनाहं वनवासकृतं सुखं ॥ ४७ ॥

इमे ऽपि च हया वीर यदि ते वनवासिनः ।
परिचर्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिं ॥ ४८ ॥
तव शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन् ।
अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहं ॥ ४९ ॥
न हि शक्या प्रवेष्टुं सा मयायोध्या त्वया विना ।
राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ॥ ५० ॥
वनवासे क्षयं प्राप्ते ममैष हि मनोरथः ।
यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥ ५१ ॥
चतुर्दश हि वर्षाणि सहितस्य त्वया वने
क्षणभूतानि यास्यन्ति शतशस्तु ततो ऽन्यथा ॥ ५२ ॥
भृत्यवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि ।
भक्तं भृत्यं स्थितं स्थित्यां न मां त्वं हातुमर्हसि ॥ ५३ ॥
एवं बहुविधं दीनं याचमानं पुनः पुनः ।
रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५४ ॥
जानामि परमां भक्तिं मयि ते भर्तृवत्सल ।
शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ५५ ॥
नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ।
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ॥ ५६ ॥
परितुष्टा हि सा देवी वनवासं गते मयि ।
राजानं नातिशङ्केत मिथ्यावादीति धार्मिकं ॥ ५७ ॥

एष मे प्रथमः कल्पो यदम्बा मे यवीयसी ।
भरतारक्षितं स्फीतं पुत्रराज्यमवाप्नुयात् ॥ ५८ ॥
मम प्रियार्थं राज्ञश्च सुमन्त्र त्वं पुरीं व्रज ।
संदिष्टश्चासि यानर्थांस्तांस्तान् ब्रूयास्तथा तथा ॥ ५९ ॥
इत्युक्त्वा वचनं सूतं शान्त्वयित्वा पुनः पुनः ।
गुहं वचनमक्लीबं रामो हेतुमदब्रवीत् ॥ ६० ॥
नेदानीं गुह योग्योऽयं वासो मे सजने वने ।
अवश्यं ह्याश्रमे वासः कर्तव्यस्तद्गतो विधिः ॥ ६१ ॥
सोऽहं गृहीत्वा नियमं तपस्विजनभूषणं ।
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ॥ ६२ ॥
तत् क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् ।
लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः ॥ ६३ ॥
तौ तदा चीरवसनौ जटामण्डलधारिणौ ।
अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ६४ ॥
ततो वैखानसं मार्गमास्थाय सहलक्ष्मणः ।
व्रतमादिष्टवान् रामः सहायं गुहमब्रवीत् ॥ ६५ ॥
अप्रमत्तो बले कोषे दुर्गे जनपदे तथा ।
भवेथा गुह राज्यं हि दुरारक्ष्यतमं मतं ॥ ६६ ॥
ततस्तं समनुज्ञाप्य गुहमिक्ष्वाकुनन्दनः ।
जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ॥ ६७ ॥

स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः ।
तितीर्षुः शीघ्रगां गङ्गामिदं लक्ष्मणमब्रवीत् ॥ ६८ ॥
आरोह त्वं नरव्याघ्र स्थितां नावमिमां शनैः ।
सीतां चारोपयान्वक्षं परिगृह्य मनस्विनीं ॥ ६९ ॥
स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन् ।
आरोप्य मैथिलीं नावमारुरोहात्मवांस्ततः ॥ ७० ॥
अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ।
ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ॥ ७१ ॥
राघवोऽपि महातेजा नावमारुह्य तां ततः ।
ब्रह्मवत् क्षत्रवच्चैव जजाप हितमात्मनः ॥ ७२ ॥
आचम्य च यथाशास्त्रं नदीं तां सह सीतया ।
प्राणमत् प्रीतिसंहृष्टो लक्ष्मणश्च महारथः ॥ ७३ ॥
अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहं ।
आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ७४ ॥
ततस्तैश्चोदिता नौका कर्णधारसमाहिता ।
वक्त्रोर्मिवेगाभिहता गङ्गासलिलमत्यगात् ॥ ७५ ॥
मध्यं तु समनुप्राप्य भागीरथ्या अनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥ ७६ ॥
पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः ॥ ७७ ॥

चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥ ७८ ॥
ततस्त्वां देवि शुभगे क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता गङ्गे सर्वकामप्रदायिनि ॥ ७९ ॥
त्वं हि त्रिपथगे देवि ब्रह्मलोकं समक्षसे ।
भार्या चोदधिराजस्य लोकेऽस्मिन् संप्रदृश्यसे ॥ ८० ॥
सा त्वां देवि नमस्यामि प्रशंसामि च शोभने ।
प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥ ८१ ॥
गवां शतसहस्रं च वस्त्राण्यन्नं च पेशलं ।
ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८२ ॥
सुराघटसहस्रेण मांसभूतोदनेन च ।
यक्ष्ये त्वां प्रयता देवि पुरीं पुनरुपागता ॥ ८३ ॥
यानि त्वत्तीरवासानि दैवतानि च सन्ति हि ।
तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ८४ ॥
पुनरेव महाबाहुर्मया भ्रात्रा च संगतः ।
अयोध्यां वनवासात् तु प्रविशत्वनघोऽनघे ॥ ८५ ॥
तथा संभाषमाणा सा सीता गङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ८६ ॥
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ॥ ८७ ॥

अथाब्रवीन्महाबाहुः सुमित्रानन्दवर्धनं ।
भव संरक्षणार्थाय सजने विजने ऽपि वा ॥ ८८ ॥
अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु ।
पृष्ठतो ऽनुगमिष्यामि सीतां त्वां चानुपालयन् ॥ ८९ ॥
न हि तावदतिक्रान्ता ऽसुकरा काचन क्रिया ।
अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ॥ ९० ॥
प्रणष्टजनसंबाधं क्षेत्रारामविवर्जितं ।
विषमं च प्रपातं च वनमद्य प्रवेक्ष्यति ॥ ९१ ॥
श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणो ऽग्रतः ।
अनन्तरं च सीताया राघवो रघुनन्दनः ॥ ९२ ॥
अवलोक्यमानौ तु सुमन्त्रो यत्र तां दिशं ।
तौ जग्मतुर्धनुष्पाणी सीतया सह तद्वनं ॥ ९३ ॥
अदर्शनगतौ ज्ञात्वा भ्रातरौ पार्थिवात्मजौ ।
सूतः सह गुहेनाथ वनात् तस्मान्न्यवर्तत ॥ ९४ ॥
सुपुष्पितायैस्तरुभिर्लताविटपसंकटं ।
नानाविहगसंघुष्टमगाहेतां ततो वनं ॥ ९५ ॥
सुदूरमथ गत्वा तौ भ्रातरौ रामलक्ष्मणौ ।
अवरोहशताकीर्णं वटमासाद्य तस्थतुः ॥ ९६ ॥
तौ तत्र सुखमासीनौ नातिदूरे ह्यपश्यतां ।
सुदर्शनामिति ख्यातां पद्मिनीं पद्मसंकटां ॥ ९७ ॥

दर्शयामास काकुत्स्थो वैदेह्या लक्ष्मणस्य च ।
पश्य लक्ष्मण पद्मिन्या यथेदं शोभितं सरः ॥ ९८ ॥
तत्र तौ पीतपानीयौ हत्वैकं पृषतं मृगं ।
ज्वलयित्वा हुतवहं पेचतुस्तौ नरर्षभौ ॥ ९९ ॥
तौ भक्षयित्वा तन्मांसं सीतया सह राघवौ ।
न्यग्रोधमेव वासार्थं कल्पयामासतुस्तदा ॥ १०० ॥

इत्ययोध्याकाण्डे गङ्गासंतरणं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

## CAPUT LIII.

### ALMI RAMAE QUERELA.

स तं वृक्षं समासाद्य संध्यामन्वास्य पश्चिमां ।
रामो रमयतां श्रेष्ठ इति होवाच लक्ष्मणं ॥ १ ॥
अद्येयं प्रथमा रात्रिर्याता जनपदाद्बहिः ।
या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि ॥ २ ॥
जागर्तव्यमतन्द्रिभ्यामद्य प्रभृति रात्रिषु ।
योगक्षेमो हि सीताया वर्तते लक्ष्मणावयोः ॥ ३ ॥

रात्रिं कथंचिदेवेमां सौमित्रे वर्तयामहे ।
उपावर्तामहे भूमावास्तीर्य स्वयमर्जितैः ॥ ४ ॥
स तु संविश्य मेदिन्यां महार्हशयनोचितः ।
इमाः सौमित्रये रामो व्याजहार कथाः शुभाः ॥ ५ ॥
ध्रुवमद्य महाराजो दुःखं स्वपिति लक्ष्मण ।
कृतकामा तु कैकेयी तुष्टा भवितुमर्हति ॥ ६ ॥
सा हि देवी महाराजं कैकेयी राज्यकारणात् ।
अपि न च्यावयेत् प्राणान् दृष्ट्वा भरतमागतं ॥ ७ ॥
अनाथश्च हि वृद्धश्च मया चैव विनाकृतः ।
किं करिष्यति कामात्मा कैकेय्या वशमागतः ॥ ८ ॥
इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमं ।
काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥ ९ ॥
को ह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत् ।
छन्दानुवर्तिनं पुत्रं तातो मामिव लक्ष्मण ॥ १० ॥
सुखी बत सभार्यश्च भरतः केकयीसुतः ।
मुदितान् कोशलानेको यो भक्ष्यत्यधिराजवत् ॥ ११ ॥
स हि राज्यस्य सर्वस्य सुखमेको भविष्यति ।
ताते तु वयसातीते मयि चारण्यमाश्रिते ॥ १२ ॥
अर्थधर्मौ परित्यज्य यः काममनुवर्तते ।
एवमापद्यते क्षिप्रं राजा दशरथो यथा ॥ १३ ॥

मन्ये दशरथान्ताय मम प्रव्राजनाय च ।
कैकेयी सौम्य संप्राप्ता राज्याय भरतस्य च ॥ १४ ॥
अपीदानीं तु कैकेयी सौभाग्यमदमोहिता ।
न प्रबाधेत मद्द्वेषात् कौशल्यां मद्विनाकृतां ॥ १५ ॥
मत्पक्षग्राहिणीं नित्यं सुमित्रां वा तपस्विनीं ।
अयोध्यामित एव त्वं काले प्रविश लक्ष्मण ॥ १६ ॥
अहमेको गमिष्यामि सीतया सह दण्डकान् ।
अनाथाया हि नाथस्त्वं कौशल्याया भविष्यसि ॥ १७ ॥
क्षुद्रकर्मा हि कैकेयी द्वेषादन्यायमाचरेत् ।
परिभवेद्धि राज्यस्थे भरते मम मातरं ॥ १८ ॥
नूनं जात्यन्तरे तात स्त्रियः पुत्रैर्वियोजिताः ।
जनन्या मम सौमित्रे तदद्यैतदुपस्थितं ॥ १९ ॥
मया हि चिरपुष्टेन दुःखसंवर्धितेन च ।
विप्रायुज्यत कौशल्या फलकाले धिगस्तु मां ॥ २० ॥
मास्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशं ।
सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकं ॥ २१ ॥
मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण सारिका ।
यस्यास्तच्छ्रूयते वाक्यं शुक पादमरेर्दश ॥ २२ ॥
* यत्त्वदेकाग्र खस्यत्र यावन्नास्य मुखे व्रणं ।
* तावदात्मविमोक्षार्थं शुक पादमरेर्दश ॥ २३ ॥

शोचन्त्याश्चाल्पभाग्याया न किंचिदुपकुर्वता ।
पुत्रेण किमपुत्राया मया कार्यमरिंदम ॥ २४ ॥
अल्पभाग्या हि मे माता कौशल्या रहिता मया ।
शेते परमदुःखार्त्ता पतिता शोकसागरे ॥ २५ ॥
एको ह्यहमयोध्यां च पृथिवीं चापि लक्ष्मण ।
तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणं ॥ २६ ॥
अधर्मभयभीतश्च परलोकस्य चानघ ।
तेन लक्ष्मण नाद्याहमात्मानमभिषेचये ॥ २७ ॥
एतदन्यच्च करुणं विलप्य विजने बहु ।
अश्रुपूर्णमुखो दीनो निशि तूष्णीमुपाविशत् ॥ २८ ॥
विलापोपरतं रामं गतार्चिषमिवानलं ।
समुद्रमिव निर्वेगमाश्वासयति लक्ष्मणः ॥ २९ ॥
ध्रुवमद्य पुरी राजन्नयोध्यायुधिनां वर ।
निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ ३० ॥
नैतदौपयिकं राम यदिदं परितप्यसे ।
विषादयसि सीतां च मां चैव पुरुषर्षभ ॥ ३१ ॥
न च सीता त्वया हीना न चाहमपि राघव ।
मुहूर्त्तमपि जीवेव जलान्मत्स्याविवोद्धृतौ ॥ ३२ ॥
न हि तातं न शत्रुघ्नं न सुमित्रां परंतप ।
द्रष्टुमिच्छेयमद्याहं स्वर्गं वापि त्वया विना ॥ ३३ ॥

ततस्तत्र सुखासीनौ नातिदूरे निरीक्ष्य तां ।
न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥ ३४ ॥

इत्ययोध्याकाण्डे श्रीरामविलापो नाम त्रिपञ्चाशः सर्गः
॥ ५३ ॥

---

## CAPUT LIV.

### COMMORATIO IN EREMO BHARADVAJI.

ते तु तस्मिन् महावृक्ष उषित्वा रजनीं शुभां ।
विमलेऽभ्युदिते सूर्ये तस्माद्देशात् प्रतस्थिरे ॥ १ ॥
यत्र भागीरथीं गङ्गां यमुनाभिप्रवर्त्तते ।
जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनं ॥ २ ॥
ते भूमिभागान् विविधान् देशांश्चापि मनोहरान् ।
अदृष्टपूर्वान् संपश्यंस्तत्र तत्र यशस्विनः ॥ ३ ॥
यथा क्षेमेण पश्यंश्च पुष्पितान् विविधान् द्रुमान् ।
निवृत्तमात्रे दिवसे रामः सौमित्रिमब्रवीत् ॥ ४ ॥
प्रयागमभितः पश्य सौमित्रे धूममुच्छ्रितं ।
अग्नेर्भगवतः केतुं मन्ये संनिहितो मुनिः ॥ ५ ॥

नूनं प्राप्ताः स्म संभेदं गङ्गायमुनयोर्वयं ।
तथा हि श्रूयते शब्दो वारिणो वारिघर्षजः ॥ ६ ॥
दारूणि परिभिन्नानि वनजैरुपजीविभिः ।
भरद्वाजाश्रमे चैते दृश्यन्ते विविधा द्रुमाः ॥ ७ ॥
धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे ।
गङ्गायमुनयोः संधौ प्रापतुर्निलयं मुनेः ॥ ८ ॥
रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः ।
गत्वा मुहूर्त्तमध्वानं भरद्वाजमुपागमत् ॥ ९ ॥
स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतं ।
शंसितव्रतमेकाग्रं तपसा लब्धचक्षुषं ॥ १० ॥
हुताग्निहोत्रं दृष्ट्वैव महाभागः कृताञ्जलिः ।
रामः सौमित्रिणा सार्द्धं सीतया चाभ्यवादयत् ॥ ११ ॥
न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः ।
पुत्रौ दशरथस्यावां भगवन् रामलक्ष्मणौ ॥ १२ ॥
भार्या ममेयं कल्याणी वैदेही जनकात्मजा ।
मां चानुयाता विजनं तपोवनमनिन्दिता ॥ १३ ॥
पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः ।
अयमन्वगमद्भ्राता वनमेव धृतव्रतः ॥ १४ ॥
पित्रा नियुक्ता भगवन् प्रवेक्ष्यामस्तपोवनं ।
धर्ममेवाचरिष्यामस्तत्र मूलफलाशनाः ॥ १५ ॥

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
उपानयत धर्मात्मा गामर्घ्यमुदकं तथा ॥ १६ ॥
नानाविधानन्नरसान् वन्यमूलफलाश्रयान् ।
तेभ्यो ददौ तप्ततपा वासं चाप्यभ्यकल्पयत् ॥ १७ ॥
मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः ।
राममागतमभ्यर्च्य सो ऽभ्यनन्दत तं मुनिः ॥ १८ ॥
परिगृह्य तु तामर्चामुपविष्टं स राघवं ।
भरद्वाजो ऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ १९ ॥
चिरस्य खलु काकुत्स्थ पश्यामि त्वामिहागतं ।
श्रुतं तव मया चैव विवासनमकारणं ॥ २० ॥
अवकाशो विविक्तो ऽयं महानद्योः समागमे ।
पुण्यश्च रमणीयश्च वसत्विह भवान् सुखं ॥ २१ ॥
एवमुक्तस्तु वचनं भरद्वाजेन राघवः ।
प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २२ ॥
भगवन्नित आसन्नः पौरजानपदो जनः ।
सुदर्शमिह मां प्रेक्ष्य मन्ये ऽहमिममाश्रमं ॥ २३ ॥
आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः ।
अनेन कारणेनाहमिह वासं न रोचये ॥ २४ ॥
एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमं ।
रमेत यत्र वैदेही सुखार्हा जनकात्मजा ॥ २५ ॥

इति रामवचः श्रुत्वा भरद्वाजो महामुनिः ।
ध्यात्वा मुहूर्तमेकाग्रो रामं वचनमब्रवीत् ॥ २६ ॥
दशक्रोश इतस्तात गिरिर्यस्मिन् निवत्स्यसि ।
महर्षिसेवितः पुण्यः सर्वतः शुभदर्शनः ॥ २७ ॥
गोलांगुलानुचरितो वानरर्क्षनिषेवितः ।
चित्रकूट इति ख्यातो गन्धमादनसंनिभः ॥ २८ ॥
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते ।
कल्याणानि समाधत्ते न पापे कुरुते मनः ॥ २९ ॥
ऋषयस्तत्र बहवो विहृत्य शरदां शतं ।
तपसा दिवमारूढाः कपालशिरसा सह ॥ ३० ॥
प्रविविक्तमहं मन्ये निवासं भवतः सुखं ।
इह वा वनवासाय वस राम मया सह ॥ ३१ ॥
इत्युक्त्वा सर्वकामैस्तं भरद्वाजः प्रियातिथिं ।
सभार्यं च सह भ्रात्रा प्रतिजग्राह धर्मवित् ॥ ३२ ॥
तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः ।
प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३३ ॥
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ।
भरद्वाजाश्रमे रम्ये तां रात्रिमवसत् सुखं ॥ ३४ ॥
प्रभातायां तु शर्वर्यां भरद्वाजमुपागतः ।
उवाच नरशार्दूलो मुनिं ज्वलिततेजसं ॥ ३५ ॥

शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे ।
उषिताः स्मेह वसतिमनुजानातु नो भवान् ॥ ३६ ॥
रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदं ।
मधुमूलफलोपेतं चित्रकूटगिरिं व्रज ॥ ३७ ॥
वासमौपयिकं मन्ये तव राम महाबल ।
गम्यतां भवता शैलश्चित्रकूटः स विश्रुतः ॥ ३८ ॥
तत्र कुञ्जरयूथानि मृगयूथानि चैव हि ।
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव ॥ ३९ ॥
सरित्प्रस्रवणप्रस्थान् गुहाकन्दरनिर्झरान् ।
चरतः सीतया सार्द्धं नन्दिष्यति मनस्तव ॥ ४० ॥
प्रहृष्टकोयष्टिभकोकिलस्वनैर्- ।
विनादयन्तं वसुधाधरं शिवं ।
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः ।
सुरम्यमासाद्य समावसाश्रमं ॥ ४१ ॥

इत्ययोध्याकाण्डे भरद्वाजाश्रमनिवासो नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## CAPUT LV.

### YAMUNAE TRAIECTUS.

उषित्वा रजनीं तत्र राजपुत्रावरिंदमौ ।
महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १ ॥
तेषां स्वस्त्ययनं चैव महर्षिः स चकार ह ।
प्रस्थितांस्तानभिप्रेक्ष्य पिता पुत्रानिवौरसान् ॥ २ ॥
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ।
भरद्वाजो महातेजा रामं सत्यपराक्रमं ॥ ३ ॥
गङ्गायमुनयोः संधिमासाद्य मनुजर्षभौ ।
कालिन्दीमनुगच्छेतं नदीं पश्चान्मुखाश्रितां ॥ ४ ॥
तस्यास्तीर्थं प्रचरितं प्रकामं प्रेक्ष्य राघव ।
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीं ॥ ५ ॥
तस्या नद्याः परं पारं नातिदूरे महाद्रुमः ।
सत्याभियाचनः श्रीमान् न्यग्रोधो हरितच्छदः ॥ ६ ॥
नानापक्षिगणावासः श्याम इत्यभिविश्रुतः ।
तस्मिन् सीताञ्जलिं कृत्वा प्रयुञ्जीताशिषः शिवाः ॥ ७ ॥
क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननं ।
शल्लकीबदरीमिश्रं राम वंशैश्च यामुनैः ॥ ८ ॥

स पन्थाश्चित्रकूटस्य यातः सुबहुशो मया ।
रम्यो मार्दवयुक्तश्च दावैश्चैव विवर्जितः ॥ ९ ॥
इति पन्थानमादिश्य महर्षिः स न्यवर्तत ।
रामेण लक्ष्मणेनापि सीतया चाभिवादितः ॥ १० ॥
उपावृत्ते मुनौ तस्मिन् रामो लक्ष्मणमब्रवीत् ।
कृतपुण्याः स्म सौमित्रे मुनिर्यन्नोऽनुकम्पते ॥ ११ ॥
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ।
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीं ॥ १२ ॥
अथासाद्य तु कालिन्दीं शीघ्रस्रोतसमापगां ।
चिन्तामापेदिरे सद्यो नदीजलतितीर्षवः ॥ १३ ॥
तौ काष्ठसंघातमथो चक्रतुः सुमहाप्लवं ।
शुष्कैर्वंशैः समाकीर्णमुशीरैश्च समावृतं ॥ १४ ॥
ततो वेतसशाखाश्च जम्बुशाखाश्च वीर्यवान् ।
चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनं ॥ १५ ॥
तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियां ।
ईषत् संलज्जमानां तामध्यारोपयत प्लवं ॥ १६ ॥
पार्श्वे तत्र च वैदेह्या वसने भूषणानि च ।
प्लवे कठिनकाजं च रामश्चक्रे सहायुधैः ॥ १७ ॥
आरोप्य सीतां प्रथमं संघाटं परिगृह्य च ।
ततः प्रतेरतुर्यत्तौ वीरौ दशरथात्मजौ ॥ १८ ॥

कलिन्दीमथ्यमायाता सीता चैनामवन्दत ।
स्वस्ति देवि तरामि त्वां पारयेन्मे पतिर्व्रतं ॥ १९ ॥
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ।
स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालितां ॥ २० ॥
कलिन्दीमथ सीता तु याचमाना कृताञ्जलिः ।
तीरमेवाभिसंप्राप्ता दक्षिणं वरदर्शिनी ॥ २१ ॥
ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ।
श्यामं न्यग्रोधमासेदुः शीतलं हरितछदं ॥ २२ ॥
न्यग्रोधं तमुपागम्य वैदेही विदमब्रवीत् ।
नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व्रतं ॥ २३ ॥
कौशल्यां चैव पश्येम सुमित्रां च यशस्विनीं ।
इति सीताञ्जलिं कृत्वा पर्यगछद्वनस्पतिं ॥ २४ ॥
अवलोक्य ततः सीतामायाचन्तीमनिन्दितां ।
दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् ॥ २५ ॥
सीतामादाय गछ त्वमग्रतो भरतानुज ।
पृष्ठतोऽनुगमिष्यामि सायुधो द्विपदां वर ॥ २६ ॥
यद्यत् फलं प्रार्थयते पुष्पं वा जनकात्मजा ।
तत् तत् प्रयछ वैदेह्या यत्रास्या रमते मनः ॥ २७ ॥
गछतोस्तु तयोर्मध्ये बभूव जनकात्मजा ।
मातंगयोर्मध्यगता शुभा नागवधूरिव ॥ २८ ॥

एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीं ।
अदृष्टरूपां पश्यन्ती रामं पप्रच्छ साबला ॥ २९ ॥
रमणीयान् बहुविधान् पादपान् कुसुमोत्कटान् ।
सीतावचनसंरब्ध आनयामास लक्ष्मणः ॥ ३० ॥
विचित्रवालुकजलां हंससारसनादितां ।
रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीं ॥ ३१ ॥
क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ।
बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुनावने ॥ ३२ ॥
विहृत्य ते बर्हिणपूगनादिते ।
शुभे वने वारणवानरायुते ।
समं नदीवप्रमुपेत्य सत्वरं ।
निवासमाजग्मुरदीनदर्शनाः ॥ ३३ ॥

इत्ययोध्याकाण्डे यमुनातरणं नाम पञ्चपञ्चाशः सर्गः
॥ ५५ ॥

## CAPUT LVI.

### Habitatio in monte Chitrakuto.

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरं ।
प्रबोधयामास शनैर्लक्ष्मणं रघुपुंगवः ॥ १ ॥
सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनं ।
संप्रतिष्ठामहे कालः प्रस्थानस्य परंतप ॥ २ ॥
स सुप्तस्तु ततो भ्रात्रा समये प्रतिबोधितः ।
जहौ निद्रां च तन्द्रां च प्रसक्तं च परिश्रमं ॥ ३ ॥
तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलं ।
पन्थानमृषिणोद्दिष्टं चित्रकूटस्य तं ययुः ॥ ४ ॥
ततः संप्रस्थितः काले रामः सौमित्रिणा सह ।
सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५ ॥
आदीप्तानिव वैदेहि सर्वतः पुष्पितान् नगान् ।
स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये ॥ ६ ॥
पश्य भल्लातकान् बिल्वान् नरैरनुपसेवितान् ।
फलपुष्पैरवनतान् नूनं शक्ष्याम जीवितुं ॥ ७ ॥
पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण ।
मधूनि मधुकारिभिः संभृतानि नगे नगे ॥ ८ ॥

एष क्रोशति दात्यूहस्तं शिखी प्रतिकूजति ।
रमणीये वनोद्देशे पुष्पसंस्तरसंकटे ॥ ९ ॥
मातंगयूथानुसृतं पक्षिसंघानुनादितं ।
चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिं ॥ १० ॥
समभूमितले रम्ये द्रुमैर्बहुभिरावृते ।
पुण्ये रंस्यामहे तावच्चित्रकूटस्य कानने ॥ ११ ॥
ततस्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्यमासेदतुः शैलं चित्रकूटमनोहरं ॥ १२ ॥
. . . . . . . . . . . . . . ।
. . . . . . . . . . . . . . ॥ १३ ॥
* [ मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः ।
* बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥
* मुनयश्च महात्मानो वसन्त्यस्मिन् शिलोच्चये ।
* अयं वासो भवेत् तावदत्र सौम्य रमेमहि ॥
* इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः ।
* अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥
* तान् महर्षिः प्रमुदितः पूजयामास धर्मवित् ।
* आस्यतामिति चोवाच स्वागतं तं निवेद्य वै ॥
** राघवं प्रियसंयुक्तमिदं वचनमब्रवीत् ।
** ज्ञातं मया रघुश्रेष्ठ त्वदागमनकारणं ॥

** अत्र वासमृषीणां च सकाशे राघव प्रभो ।
** इति तेन समाज्ञप्तः प्रियमाणो महारथः ॥
** तथेति प्रतिजग्राह ऋषिणोक्तं कृताञ्जलिः ।
** संनिवेश्य यथान्यायमात्मानमृषये प्रभुः ॥ ]
ततो ऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः ।
लक्ष्मणानय दारूणि दृढानि च वराणि च ॥ १४ ॥
कुरुष्वावसथं सौम्य वासे मे ऽभिरतं मनः ।
तस्य शैलस्य पादे ऽस्मिन् विविक्ते सलिलावृते ॥ १५ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान् ।
आजहार ततश्चक्रे पर्णशालामरिंदमः ॥ १६ ॥
तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनां ।
शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥ १७ ॥
ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयं ।
कर्तव्यं वास्तुशमनं सौमित्रे चिरजीविभिः ॥ १८ ॥
मृगं हत्वानय क्षिप्रं लक्ष्मणेह शुभेक्षण ।
कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर ॥ १९ ॥
भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा ।
चकार च यथोक्तं स तं रामः पुनरब्रवीत् ॥ २० ॥
ऐणेयं श्रपयस्वैतत् शालां यक्ष्यामहे वयं ।
त्वर सौम्य मुहूर्तो ऽयं ध्रुवश्च दिवसो ह्ययं ॥ २१ ॥

स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् ।
अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २२ ॥
तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितं ।
लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ॥ २३ ॥
अयं सर्वः समस्ताङ्गः श्रितः कृष्णमृगो मया ।
देवता देवसंकाश यजस्व कुशलो ह्यसि ॥ २४ ॥
रामः स्नात्वा तु नियतो गुणवान् यज्ञकोविदः ।
संग्रहेणाकरोत् सर्वान् मन्त्रान् सत्रावसानिकान् ॥ २५ ॥
दृष्ट्वा देवगणान् सर्वान् विवेशावसथं शुचिः ।
बभूव च मनोह्लादो रामस्यामिततेजसः ॥ २६ ॥
वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च ।
वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥ २७ ॥
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि ।
पापसंशमनं रामश्चकार बलिमुत्तमं ॥ २८ ॥
वेदिस्थलविधानानि चैत्यान्यायतनानि च ।
आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥ २९ ॥
वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि ।
अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमित्कुशैः ॥ ३० ॥
तौ तर्पयित्वा भूतानि राघवौ सह सीतया ।
तदा विविशतुः शालां सुशुभां शुभलक्षणां ॥ ३१ ॥

तां वृक्षपर्णच्छदनां मनोज्ञां ।
यथाप्रदेशं सुकृतां निवातां ।
वासाय सर्वे विविशुः समेताः ।
सभां यथा देवगणाः सुधर्मां ॥ ३२ ॥
सुरम्यमासाद्य तु चित्रकूटं ।
नदीं च तां माल्यवतीं सुतीर्थां ।
ननन्द रामो मृगपक्षिजुष्टां ।
जहौ च दुःखं पुरविप्रवासात् ॥ ३३ ॥

इत्ययोध्याकाण्डे चित्रकूटनिवासो नाम षट्पञ्चाशः सर्गः
॥ ५६ ॥

---

## CAPUT LVII.

### SUMANTRAE REDITUS.

कथयित्वा सुदुःखार्त्तः सुमन्त्रेण चिरं सह ।
रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १ ॥
* भरद्वाजाभिगमनं प्रयागे च सभाजनं ।
* आ गिरेर्गमनं तेषां तत्रस्थैरभिलक्षितं ॥ २ ॥
अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३ ॥

स वनानि सुगन्धीनि सरितश्च सरांसि च ।
पश्यन्नतिययौ शीघ्रं ग्रामाणि नगराणि च ॥ ४ ॥
ततः सायाह्नसमये तृतीयेऽहनि सारथिः ।
अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥ ५ ॥
स शून्यामिव निःशब्दां दृष्ट्वा परमदुर्मनाः ।
सुमन्त्रश्चिन्तयामास शोकवेगसमाहतः ॥ ६ ॥
कच्चिन्न सगजा साश्वा सजना सजनाधिपा ।
रामसंतापदुःखेन दग्धा शोकाग्निना पुरी ॥ ७ ॥
इति चिन्तापरः सूतो वाजिभिः शीघ्रयायिभिः ।
नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८ ॥
सुमन्त्रमभिगच्छन्तं शतशोऽथ सहस्रशः ।
क्व राम इति पृच्छन्तः सूतमभ्यद्रवन् नराः ॥ ९ ॥
तेषां शशंस गङ्गायामहमापृच्छ्य राघवं ।
अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १० ॥
ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा नराः ।
अहो धिगिति निःश्वस्य हा रामेति विचुक्रुशुः ॥ ११ ॥
शुश्राव च वचस्तेषां वृन्दं वृन्दं च तिष्ठतां ।
हताः स्म खलु ये नेह पश्याम इति राघवं ॥ १२ ॥
दानयज्ञविवाहेषु समाजेषु महत्सु च ।
न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥

किं समर्थं जनस्यास्य किं प्रियं किं सुखावहं ।
इति रामेण नगरं पित्रेव परिपालितं ॥ १४ ॥
वातायनगतानां च स्त्रीणामन्वन्तरायणं ।
राममेवाभितप्तानां शुश्राव परिदेवनं ॥ १५ ॥
स राजमार्गमध्येन सुमन्त्रः पिहिताननः ।
यत्र राजा दशरथस्तदेवोपययौ गृहं ॥ १६ ॥
सोऽवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च ।
कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७ ॥
ततो दशरथस्त्रीणां प्रासादेभ्यस्ततस्ततः ।
रामशोकाभितप्तानां मन्दं शुश्राव जल्पितं ॥ १८ ॥
सह रामेण निर्यातो विना राममिहागतः ।
सूतः किं नाम कौशल्यां क्रोशन्तीं प्रतिवक्ष्यति ॥ १९ ॥
यथा च मन्ये दुर्जीविमेवं न सुकरं ध्रुवं ।
आच्छिद्य पुत्रे निर्याते कौशल्या यत्र जीवति ॥ २० ॥
सत्यरूपं तु तद्वाक्यं राजस्त्रीणां निशामयन् ।
प्रदीप्त इव शोकेन विवेश सहसा गृहं ॥ २१ ॥
स प्रविश्याष्टमां कक्ष्यां राजानं दीनमातुरं ।
पुत्रशोकपरिद्यूनमपश्यत् पाण्डुरे गृहे ॥ २२ ॥
अभिगम्य तमासीनं राजानमभिवाद्य च ।
सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २३ ॥

स तूष्णीमेव तच्छ्रुत्वा राजा विद्रुतमानसः ।
मूर्छितो न्यपतद्भूमौ रामशोकाभिपीडितः ॥ २४ ॥
ततोऽन्तःपुरमाविद्धं मूर्छिते पृथिवीपतौ ।
उत्क्षिप्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २५ ॥
सुमित्रया तु सहिता कौशल्या पतितं पतिं ।
उत्थापयामास तदा वचनं चेदमब्रवीत् ॥ २६ ॥
इमं तस्य महाभाग दूतं दुष्करकारिणः ।
वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २७ ॥
अद्येममनयं कृत्वा व्यपत्रपसि राघव ।
उत्तिष्ठ सुकृतं तेऽस्तु शोके नः स्यात् सहायता ॥ २८ ॥
देव यस्या भयाद्रामं नानुपृच्छसि सारथिं ।
नेह तिष्ठति कैकेयी विश्रब्धं प्रतिभाष्यतां ॥ २९ ॥
सा तथोक्त्वा महाराजं कौशल्या शोकलालसा ।
धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३० ॥
विलपन्तीं तथा दृष्ट्वा कौशल्यां पतितां भुवि ।
पतिं चावेक्ष्य ताः सर्वाः समन्ताद्रुरुदुः स्त्रियः ॥ ३१ ॥

इत्ययोध्याकाण्डे सुमन्त्रोपावर्तनं नाम सप्तपञ्चाशः सर्गः
॥ ५७ ॥

## CAPUT LVIII.

### RAMAE MANDATA NUNTIATA.

प्रत्याश्वस्तो यदा राजा मोहात् प्रत्यागतस्मृतिः ।
अथाजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १ ॥
तदा सूतो महाराजं कृताञ्जलिरुपस्थितः ।
वृद्धं परमसंतप्तं नवग्रहमिव द्विपं ॥ २ ॥
राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितं ।
अश्रुपूर्णमुखं दीनमुवाच परमार्त्तवत् ॥ ३ ॥
क्व नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः ।
सोऽत्यन्तसुखितः सूत किमशिष्यति राघवः ॥ ४ ॥
दुःखस्यानुचितो दुःखं सुमन्त्र शयनोचितः ।
भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ५ ॥
यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः ।
स वत्स्यति कथं रामो विजनं वनमाश्रितः ॥ ६ ॥
सुकुमार्या तपस्विन्या सुमन्त्र सह सीतया ।
राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ७ ॥
सिद्धार्थः खलु सूत त्वं येन दृष्टौ ममात्मजौ ।
वनं तत् प्रविशन्तौ तावश्विनाविव मन्दरं ॥ ८ ॥

किमुवाच वचो रामः किमुवाच च लक्ष्मणः ।
सुमन्त्र वनमासाद्य किमुवाच च मैथिली ॥ ९ ॥
आसितं शयितं भुक्तं सूत रामस्य कीर्तय ।
जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १० ॥
इति सूतो नरेन्द्रेण चोदितः सज्जमानया ।
उवाच वाचा राजानं स वाष्पपरिबद्धया ॥ ११ ॥
अब्रवीन्मे महाराज धर्ममेवानुपालयन् ।
अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च ॥ १२ ॥
सूत मद्वचनात् तस्य तातस्य विदितात्मनः ।
शिरसा वन्दनीयस्य वन्द्यौ पादौ महात्मनः ॥ १३ ॥
माता च मम कौशल्या कुशलं चाभिवादनं ।
अप्रमादं च वक्तव्या ब्रूयाश्चेनामिदं वचः ॥ १४ ॥
धर्मनित्या यथाकालमग्न्यागारपरा भव ।
देवि देवस्य पादौ च देववत् परिपालय ॥ १५ ॥
अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु ।
अनु राजानमार्यां च कैकेयीमम्ब कारय ॥ १६ ॥
कुमारे भरते वृत्तिर्वर्तितव्या च राजवत् ।
अथ ज्येष्ठा हि राजानो राजधर्ममनुस्मर ॥ १७ ॥
भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च ।
सर्वास्वेव यथान्यायं वृत्तिं वर्तस्व मातृषु ॥ १८ ॥

वक्तव्यश्च महाबाहुरिक्ष्वाकुकुलनन्दनः ।
पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥ १९ ॥
अतिक्रान्तवया राज्ञा मास्मैनमवरोरुधः ।
कौमारराज्ये जीवस्व तस्यैवाज्ञा प्रवर्त्ततां ॥ २० ॥
अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्त्तयन् ।
मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी ॥ २१ ॥
लक्ष्मणस्तु सुसंक्रुद्धो निःश्वसन् वाक्यमब्रवीत् ।
केनायमपराधेन राजपुत्रो विवासितः ॥ २२ ॥
राज्ञा तु खलु कैकेय्या लघु चाश्रित्य शासनं ।
कृतं कार्यमकार्यं वा वयं येनाभिपीडिताः ॥ २३ ॥
यदि प्रव्राजितो रामो लोभकारणकारितं ।
वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतं ॥ २४ ॥
इदं तावद्यथाकाममीश्वरस्य कृते कृतं ।
रामस्य तु परित्यागे न हेतुमुपलक्षये ॥ २५ ॥
असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् ।
जनयिष्यति संक्रोशं राघवस्य विवासनं ॥ २६ ॥
अहं तावन्महाराज पितृत्वं नोपलक्षये ।
भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥ २७ ॥
सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते रतं ।
सर्वलोकोऽनुरज्येत कथं त्वनेन कर्मणा ॥ २८ ॥

सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकं ।
सर्वलोकविरोधेन कथं राजा भविष्यति ॥ २९ ॥
जानकी तु महाराज निःश्वसन्ती तपस्विनी ।
भूतोपहतचित्तेव विष्ठिता विस्मृता स्थिता ॥ ३० ॥
अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ।
तेन दुःखेन रुदती नैव मां किंचिदब्रवीत् ॥ ३१ ॥
उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता ।
मुमोच सहसा वाष्पं प्रयान्तमुपवीक्ष्य सा ॥ ३२ ॥

इत्ययोध्याकाण्डे रामसंदेशाख्यानं नाम अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## CAPUT LIX.

### DASARATHAE QUERELA.

इति ब्रुवन्तं संदेशं सुमन्त्रं मन्त्रिसत्तमं ।
ब्रूहि शेषं पुनरिति राजा वचनमब्रवीत् ॥ १ ॥
तस्य तद्वचनं श्रुत्वा सुमन्त्रो वाक्यविक्लवः ।
कथयामास भूयोऽपि रामवृत्तान्तविस्तरं ॥ २ ॥

जटाः कृत्वा महाराज चीरवल्कलधारिणौ ।
गङ्गामुत्तीर्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥ ३ ॥
अग्रतो लक्ष्मणो यातः पालयन् रघुनन्दन ।
तांस्तथा गच्छतो दृष्ट्वा निवृत्तोऽस्म्यवशस्तदा ॥ ४ ॥
मम त्वश्वा निवृत्तस्य न प्रावर्तन्त वर्त्मनि ।
उष्णमश्रु विमुञ्चन्तो रामे संप्रस्थिते वनं ॥ ५ ॥
उभाभ्यां राजपुत्राभ्यामथ कृत्वाहमञ्जलिं ।
प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ॥ ६ ॥
गुहेन सह कृत्स्नं तु तत्रैव दिवसं स्थितः ।
आशया यदि मां रामः पुनः शब्दापयेदिति ॥ ७ ॥
विषये ते महाराज रामव्यसनकर्शिताः ।
अपि वृक्षाः परिम्लानाः सपुष्पांकुरकोरकाः ॥ ८ ॥
उपतप्तोदका नद्यः पल्वलानि सरांसि च ।
परिशुष्कपलाशानि वनान्युपवनानि च ॥ ९ ॥
न च सर्पन्ति सत्वानि व्याला न प्रसरन्ति च ।
रामशोकाभिभूतं तन्निष्कूजमिव काननं ॥ १० ॥
जलजानि च पुष्पाणि माल्यानि स्थलजानि च ।
नातिभान्त्यल्पगन्धीनि फलानि च यथा पुरा ॥ ११ ॥
अत्रोद्यानानि शून्यानि प्रलीनविहगानि च ।
न चाभिरामानारामान् पश्यामि पुरुषर्षभ ॥ १२ ॥

प्रविशन्तमयोध्यायां न कश्चिदभिनन्दति ।
नरा राममपश्यन्तो निःश्वसन्ति मुहुर्मुहुः ॥ १३ ॥
देव राजरथं दृष्ट्वा विना राममिहागतं ।
दूरादश्रुमुखः सर्वो राजमार्गगतो जनः ॥ १४ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्य रथमागतं ।
हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १५ ॥
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः ।
अन्योन्यमभिवीक्षन्ते व्यक्तमार्त्ततराः स्त्रियः ॥ १६ ॥
नामित्राणां न मित्राणामुदासीनजनस्य च ।
अहमार्त्ततया कंचिद्विशेषं नोपलक्षये ॥ १७ ॥
निरानन्दा महाराज रामप्रव्राजनातुरा ।
कौशल्या पुत्रहीनेव अयोध्या प्रतिभाति मां ॥ १८ ॥
सूतस्य वचनं श्रुत्वा राजा परमदीनवत् ।
बाष्पोपहतया वाचा तं सूतमिदमब्रवीत् ॥ १९ ॥
कैकेय्या विनियुक्तेन पापाभिजनभावया ।
मया न मन्त्रकुशलैर्वृद्धैः सह सुमन्त्रितं ॥ २० ॥
न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा न नैगमैः ।
मयायमर्थः संमोहात् स्त्रीहेतोः सहसा कृतः ॥ २१ ॥
भवितव्यतया नूनमिदं वा व्यसनं महत् ।
कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया ॥ २२ ॥

सूत यद्यस्ति ते किंचिन्मयापि सुकृतं कृतं ।
त्वं प्रापयाशु मां रामं प्राणाः संत्वरयन्ति मां ॥ २३ ॥
यद्यद्यापि ममैवाज्ञा निवर्तय तु राघवं ।
न शक्यामि विना रामं मुहूर्तमपि जीवितुं ॥ २४ ॥
अथ वापि महाबाहुर्गतो दूरं भविष्यति ।
मामेव रथमारोप्य शीघ्रं रामाय दर्शय ॥ २५ ॥
सिंहस्कन्धो महेष्वासः क्वासौ लक्ष्मणपूर्वजः ।
यदि जीवामि साध्वेनं पश्येयं सह सीतया ॥ २६ ॥
हा राम रामानुज हा हा वैदेहि तपस्विनि ।
न मां जानीत दुःखेन म्रियमाणमनाथवत् ॥ २७ ॥
* स तेन राजा दुःखेन भृशमर्पितचेतनः ।
* अवगाढः सुदुष्पारं शोकसागरमब्रवीत् ॥ २८ ॥
* रामशोकमहावेगः सीताविरहपारगः ।
* श्वसितोर्मिमहावर्तो बाष्पफेनजलाविलः ॥ २९ ॥
* बाहुविक्षेपमीनोऽसौ विक्रन्दितमहास्वनः ।
* प्रकीर्णकेशशैवालः कैकेयीवडवामुखः ॥ ३० ॥
* रामाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः ।
* वरवेलो नृशंसाया रामप्रव्राजनायुतः ॥ ३१ ॥
* यस्मिन् बत निमग्नोऽहं कौशल्ये राघवं विना ।
* दुस्तरो जीवता देवि मयायं शोकसागरः ॥ ३२ ॥

अशोभनं यो ऽहमिहाद्य राघवं ।
दिदृक्षमाणो न लभे सलक्ष्मणं ।
इतीव राजा विलपन् महायशाः ।
पपात तूर्णं शयने सुमूर्छितः ॥ ३३ ॥

इत्ययोध्याकाण्डे दशरथविलापो नाम एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## CAPUT LX.

### Causalyae consolatio.

ततो भूतोपसृष्टेव वेपमाना पुनः पुनः ।
धरण्यां गतसत्वेव कौशल्या सूतमब्रवीत् ॥ १ ॥
नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः ।
तान् विना क्षणमप्यद्य जीवितुं नोत्सहे ह्यहं ॥ २ ॥
निवर्तय रथं शीघ्रं दण्डकान् नय मामपि ।
अथ तान् नानुगच्छामि गमिष्यामि यमक्षयं ॥ ३ ॥

वाष्पवेगोपहतया स वाचा सज्जमानया ।
इदमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥
त्यज शोकं च मोहं च संभ्रमं दुःखजं तथा ।
व्यपधूय हि संतापं वने वत्स्यति राघवः ॥ ५ ॥
लक्ष्मणश्चापि रामस्य पादौ परिचरन् वने ।
आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६ ॥
विजने ऽपि वने सीता वासं प्राप्य गृहेष्विव ।
विश्रम्भं लभते ऽभीता रामे विन्यस्तमानसा ॥ ७ ॥
नास्या दैन्यकृतं किंचित् सुसूक्ष्ममपि लक्ष्यते ।
उचितेव प्रवासानां वैदेही प्रतिभाति मे ॥ ८ ॥
नगरोपवनं गत्वा यथा स्म रमते पुरा ।
तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९ ॥
बालेव रमते सीता बालचन्द्रनिभानना ।
रामारामे ह्यदीनात्मा विजने ऽपि वने सती ॥ १० ॥
तद्गतं हृदयं यस्यास्तदधीनं च जीवितं ।
अयोध्या हि भवेत् तस्या रामहीना तथा वनं ॥ ११ ॥
परिपृच्छति वैदेही ग्रामांश्च नगराणि च ।
गतिं दृष्ट्वा नदीनां च पादपान् विविधानपि ॥ १२ ॥
रामं वा लक्ष्मणं वापि पृष्ट्वा जानाति जानकी ।
अयोध्याक्रोशमात्रे तु विहारमिव संश्रिता ॥ १३ ॥

इदमेव स्मराम्यस्याः सहसैवोपजल्पितं ।
कैकेयीसंश्रितं जल्पं नेदानीं प्रतिभाति मां ॥ १४ ॥
ध्वंसयित्वा तु तद्वाक्यं प्रमादात् पर्युपस्थितं ।
ह्लादनं वचनं सूतो देव्या मधुरमब्रवीत् ॥ १५ ॥
अध्वना वातवेगेन संभ्रमेणातपेन च ।
न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा ॥ १६ ॥
सदृशं शतपत्रस्य पूर्णचन्द्रसमद्युति ।
वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७ ॥
अलक्तरसरक्ताभावलक्तरसवर्जितौ ।
अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८ ॥
नूपुरोद्घुष्टहेलेव खेलं गच्छति भामिनी ।
इदानीमपि वैदेही तद्रागान्यस्तभूषणा ॥ १९ ॥
गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता ।
नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥ २० ॥
न शोच्यास्ते न चात्मा ते शोच्यो नापि नराधिपः ।
इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतं ॥ २१ ॥
विधूय शोकं परिहृष्टमानसा ।
महर्षियाते पथि सुव्यवस्थिताः ।
वने रता वन्यफलाशनाः पितुः ।
शुभां प्रतिज्ञां परिपालयन्ति ते ॥ २२ ॥

तथा हि सूतेन सुयुक्तवादिना ।
निवार्यमाणा सुतशोककर्शिता ।
न चैव देवी विरराम कूजितात् ।
प्रियेति पुत्रेति च राघवेति च ॥ २३ ॥

इत्ययोध्याकाण्डे कौशल्यासमाश्वासो नाम षष्टितमः सर्गः
॥ ६० ॥

---

## CAPUT LXI.

### CAUSALYAE QUERELA.

वनं गते धर्मरते रामे रमयतां वरे ।
कौशल्या रुदती स्वार्त्ता भर्तारमिदमब्रवीत् ॥ १ ॥
यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः ।
सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २ ॥
कथं नरवरश्रेष्ठ पुत्रौ तौ सह सीतया ।
दुःखितौ सुखसंवृद्धौ वने दुःखं सहिष्यतः ॥ ३ ॥
सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता ।
कथमुष्णं च शीतं च वैदेही विषहिष्यति ॥ ४ ॥

भुक्ताशनं विशालाक्षी सूपदंशान्वितं शुभं ।
वन्यं नैवारमाहारं कथं सीतोपभोक्ष्यति ॥ ५ ॥
गीतवादित्रनिर्घोषं श्रुत्वा शुभसमन्विता ।
कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनं ॥ ६ ॥
महेन्द्रध्वजसंकाशः क्व नु शेते महाभुजः ।
भुजं परिघसंकाशमुपधाय सहानुजः ॥ ७ ॥
पद्मवर्णं सुकेशान्तं पद्मनिःश्वासमुत्तमं ।
कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणं ॥ ८ ॥
वज्रसारमयं नूनं हृदयं मे न संशयः ।
अपश्यन्त्या न तं यद्वै फलतीदं सहस्रधा ॥ ९ ॥
यत् त्वया करुणं कर्म व्यपोह्य मम बान्धवाः ।
निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥ १० ॥
यदि पञ्चदशे वर्षे राघवः पुनरेष्यति ।
जह्याद्राज्यं च कोशं च भरतो नोपलक्ष्यते ॥ ११ ॥
भोजयन्ति किल श्राद्धे केचित् स्वानेव बान्धवान् ।
ततः पश्चात् समीक्षन्ते कृतकार्या द्विजर्षभान् ॥ १२ ॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः ।
न पश्चात् ते ऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३ ॥
ब्राह्मणेष्वपि तृप्तेषु भुक्तशेषं द्विजोत्तमाः ।
नाभ्युपैतुमलं प्राज्ञाः शृङ्गच्छेदमिवर्षभाः ॥ १४ ॥

एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशांपते ।
भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमन्यते ॥ १५ ॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति ।
एवमेव नरव्याघ्रः परलीढं न मन्यते ॥ १६ ॥
हविराज्यं पुरोडाशाः कुशा यूपाश्च खादिराः ।
नैतानि यातयामानि कल्प्यन्ते पुनरध्वरे ॥ १७ ॥
तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव ।
नाभिमन्तुमलं रामो नष्टसोममिवाध्वरं ॥ १८ ॥
नैवंविधमसत्कारं राघवो मर्षयिष्यति ।
बलवानिव शार्दूलो बालधेरभिमर्शनं ॥ १९ ॥
नैतस्य सहिता लोका भयं कुर्युर्महामृधे ।
अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ २० ॥
नन्वसौ काञ्चनैः बाणैर्महावीर्यो महाभुजः ।
युगान्त इव भूतानि सागरानपि निर्दहेत् ॥ २१ ॥
स तादृशः सिंहबलो वृषभाक्षो नरर्षभः ।
स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥ २२ ॥
* द्विजातिचलितो धर्मः शास्त्रदृष्टः सनातनः ।
* यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २३ ॥
गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः ।
तृतीया ज्ञातयो राजन् चतुर्थी नैव विद्यते ॥ २४ ॥

तत्र त्वं मम नैवासि रामश्च वनमाश्रितः ।
(ज्ञातिभिश्च वियुक्ताहं) सर्वथा हि हता त्वया ॥ २५ ॥

इत्ययोध्याकाण्डे कौशल्याविलापो नाम एकषष्टितमः सर्गः ॥ ६१ ॥

---

## CAPUT LXII.

### Dasarathae placatio.

एवं तु क्रुद्धया राज्ञा राममात्रा सशोकया ।
श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १ ॥
चिन्तयित्वा स च नृपो मोहव्याकुलितेन्द्रियः ।
अथ दीर्घेण कालेन संज्ञामाप परंतपः ॥ २ ॥
स संज्ञामुपलभ्यैव दीर्घमुष्णं च निःश्वसन् ।
कौशल्यां पार्श्वतो दृष्ट्वा ततश्चिन्तामुपागमत् ॥ ३ ॥
तस्य चिन्तयमानस्य प्रत्यभात् कर्म दुष्कृतं ।
यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ॥ ४ ॥
अमनास्तेन शोकेन रामशोकेन च प्रभुः ।
द्वाभ्यामपि महाराजः शोकाभ्यामभितप्यते ॥ ५ ॥

दह्यमानस्तु शोकाभ्यां कौशल्यामाह भूमिपः ।
वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥ ६ ॥
प्रसादये त्वां कौशल्ये रचितोऽयं मयाञ्जलिः ।
वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७ ॥
भर्ता तु खलु नारीणां गुणवान् निर्गुणोऽपि वा ।
धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतं ॥ ८ ॥
सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा ।
नार्हसे विप्रियं वक्तुं दुःखितापि सुदुःखितं ॥ ९ ॥
तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितं ।
कौशल्या व्यसृजद्बाष्पं प्रणालीव नवोदकं ॥ १० ॥
सा मूर्ध्नि बद्ध्वा रुदती राज्ञः पद्ममिवाञ्जलिं ।
संभ्रमादब्रवीत् त्रस्ता त्वरमाणाक्षरं वचः ॥ ११ ॥
प्रसीद शिरसा याचे भूमौ निपतितास्मि ते ।
याचितास्मि हता देव क्षन्तव्याहं न हि त्वया ॥ १२ ॥
नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता ।
उभयोर्लोकयोर्लोके पत्या या संप्रसाद्यते ॥ १३ ॥
जानामि धर्मं धर्मज्ञ त्वां जाने सत्यवादिनं ।
पुत्रशोकार्त्तया तत् तु मया किमपि भाषितं ॥ १४ ॥
शोको नाशयते धैर्यं शोको नाशयते श्रुतं ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५ ॥

शक्य आपतितः सोढुं प्रहारो रिपुहस्ततः ।
सोढुमापतितः शोकः सुसूक्ष्मोऽपि न शक्यते ॥ १६ ॥
वनवासाय रामस्य पञ्चरात्रोऽद्य गण्यते ।
यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १७ ॥
तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते ।
नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १८ ॥
एवं हि कथयन्त्यास्तु कौशल्यायाः शुभं वचः ।
मन्दरश्मिरभूत् सूर्यो रजनी चाभ्यवर्तत ॥ १९ ॥
अथ प्रह्लादितो वाक्यैर्देव्या कौशल्यया नृपः ।
शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ॥ २० ॥

इत्ययोध्याकाण्डे दशरथप्रसादनं नाम द्विषष्टितमः सर्गः
॥ ६२ ॥

## CAPUT LXIII.

### EREMITAE FILIUS INTERFECTUS.

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ।
अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥
रामलक्ष्मणयोश्चैव विवासाद्वासवोपमं ।
आविवेशोपसर्गस्तं तमः सूर्यमिवासुरं ॥ २ ॥
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनं ।
अर्द्धरात्रे दशरथः संस्मरन् दुष्कृतं कृतं ॥ ३ ॥
कौशल्यां पुत्रशोकार्त्तामिदं वचनमब्रवीत् ।
यदि जागर्षि कौशल्ये शृणु मेऽवहिता वचः ॥ ४ ॥
यदाचरति कल्याणि शुभं वा यदि वाशुभं ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ५ ॥
गुरुलाघवमर्थानामारम्भे कर्मणां फलं ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥ ६ ॥
कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति ।
पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ७ ॥
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति ।
स शोचेत् फलवेलायां यथा किंशुकसेवकः ॥ ८ ॥

सोऽकृमाम्रवणं छित्वा पलाशांश्च न्यषेचयं ।
रामं फलागमे त्यक्का पश्चाच्छोचामि दुर्मतिः ॥ ९ ॥
लब्धशब्देन कौशल्ये कुमारेण धनुष्मता ।
कुमारः शब्दवेधीति मया पापमिदं कृतं ॥ १० ॥
तदिदं मेऽनुसंप्राप्तं देवि दुःखं स्वयंकृतं ।
संमोहादिह बालेन यथा स्याद्भक्षितं विषं ॥ ११ ॥
यथान्यः पुरुषः कश्चित् पलाशैर्मोहितो भवेत् ।
एवं मयाप्यविज्ञातं शब्दवेध्यमिदं फलं ॥ १२ ॥
देव्यनूढा त्वमभवो युवराजो भवाम्यहं ।
ततः प्रावृडनुप्राप्ता मम कामविवर्धिनी ॥ १३ ॥
अपास्य हि रसान् भौमान् तप्त्वा च जगदंशुभिः ।
परेताचरितां भीमां रविराविशते दिशं ॥ १४ ॥
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः ।
ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १५ ॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः ।
वृष्टिवातावधूताग्रान् पादपानभिपेदिरे ॥ १६ ॥
पतितेनाम्भसा छन्नः पतमानेन चासकृत् ।
आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ १७ ॥
पाण्डुरारुणवर्णानि श्रोतांसि विमलान्यपि ।
सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजंगवत् ॥ १८ ॥

तस्मिन्नतिसुखे काले धनुष्मानिषुमान् रथी ।
व्यायामकृतसंकल्पः सरयूमन्वगां नदीं ॥ १९ ॥
निपाने महिषं रात्रौ गजं वाभ्यागतं नदीं ।
अन्यद्वा श्वापदं किंचिज्जिघांसुरजितेन्द्रियः ॥ २० ॥
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २१ ॥
ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमं ।
शब्दं प्रति गजप्रेप्सुरभिलक्ष्यमपातयं ॥ २२ ॥
तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ।
हा हेति पततस्तोये वाणाद्व्यथितमर्मणः ॥ २३ ॥
तस्मिन् निपतिते वाणे वागभूत् तत्र मानुषी ।
कथमस्मद्विधे शस्त्रं निपतेत् तु तपस्विनि ॥ २४ ॥
प्रविविक्तां नदीं रात्रावुदहारोऽहमागतः ।
इषुणाभिहतः केन कस्य वापकृतं मया ॥ २५ ॥
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ २६ ॥
जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्यात् किं वास्यापकृतं मया ॥ २७ ॥
एवं निष्फलमारब्धं केवलानर्थसंहितं ।
न कश्चित् साधु मन्येत यथैव गुरुतल्पगं ॥ २८ ॥

नेमं तथानुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरं चोभावनुशोचामि मद्वधे ॥ २९ ॥
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ ३० ॥
वृद्धौ च मातापितरावहं चैकेषुणा हतः ।
केन स्म निहताः सर्वे सुबलेनाकृतात्मना ॥ ३१ ॥
तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥ ३२ ॥
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ।
अपश्यमिषुणा तीरे सरय्वास्तापसं हतं ॥ ३३ ॥
अवकीर्णजटाभारं प्रविद्धकलसोदकं ।
पांशुशोणितदिग्धाङ्गं शयानं शल्यपीडितं ॥ ३४ ॥
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनं ।
इत्युवाच वचः क्रूरं दिधक्षन्निव तेजसा ॥ ३५ ॥
किं तवापकृतं राजन् वने निवसता मया ।
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ ३६ ॥
एकेन खलु बाणेन मर्माण्यभिहते मयि ।
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ ३७ ॥
तौ नूनं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ।
चिरमाशाकृतां कष्टां तृष्णां संधारयिष्यतः ॥ ३८ ॥

न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा ।
पिता यन्मां न जानीते शयानं पतितं भुवि ॥ ३९ ॥
जानन्नपि च किं कुर्यादशक्तस्त्वपरिक्रमः ।
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगं ॥ ४० ॥
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ।
न त्वामनुदहेत् क्रुद्धो वनमग्निरिवैधितः ॥ ४१ ॥
इयमेकपदी राजन् यतो मे पितुराश्रमः ।
तं प्रसादय गत्वा त्वं न त्वां स कुपितः शपेत् ॥ ४२ ॥
विशल्यं कुरु मां राजन् मर्म मे निशितः शरः ।
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ ४३ ॥
सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ।
इति मामाविशच्चिन्ता तस्य शल्यापकर्षणे ॥ ४४ ॥
दुःखितस्य च दीनस्य मम शोकातुरस्य च ।
लक्षयामास हृदये चिन्तां मुनिसुतस्तदा ॥ ४५ ॥
ताम्यमानः स मां कृच्छ्रादुवाच परमार्त्तवत् ।
सीदमानो विवृत्ताङ्गश्चेष्टमानो गतः क्षयं ॥ ४६ ॥
संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाम्यहं ।
ब्रह्महत्याकृतं पापं हृदयादपनीयतां ॥ ४७ ॥
न द्विजातिरहं राजन् मा भूत् ते मनसो व्यथा ।
शूद्रायामस्मि वैश्येन जातो जनपदाधिप ॥ ४८ ॥

इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ।
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥ ४९ ॥
तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरं ।
स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ॥ ५० ॥

इत्ययोध्याकाण्डे मुनिपुत्रवधो नाम त्रिषष्टितमः सर्गः
॥ ६३ ॥

---

## CAPUT LXIV.

### DASARATHAE OBITUS.

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
प्रलपन्नेव धर्मात्मा कौशल्यामिदमब्रवीत् ॥ १ ॥
तदज्ञानान्महत् पापं कृत्वाहं व्याकुलेन्द्रियः ।
एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २ ॥
ततस्तं घटमादाय पूर्णं परमवारिणा ।
आश्रमं तमहं प्राप यथाख्यातपथं गतः ॥ ३ ॥
तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ ।
अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥

तन्निमित्ताभिरासीनौ कथाभिरपरिश्रमौ ।
तामाशां मत्कृते हीनावुपासीनावनाथवत् ॥ ५ ॥
पादशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत ।
किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ॥ ६ ॥
यन्न दत्तमिदं तात सलिले क्रीडता त्वया ।
उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमं ॥ ७ ॥
यद्व्यलीकं कृतं पुत्र मात्रा ते यदि वा मया ।
न तन्मनसि कर्तव्यं त्वया तात तपस्विना ॥ ८ ॥
त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषां ।
समासक्तास्त्वयि प्राणाः कथं त्वं नाभिभाषसे ॥ ९ ॥
मुनिमव्यक्तया वाचा तमहं सज्जमानया ।
हीनव्यञ्जनया प्रेक्ष्य भीतचित्त इवाब्रुवं ॥ १० ॥
मनसः कर्मचेष्टाभिरभिसंस्तभ्य वाग्बलं ।
आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयं ॥ ११ ॥
क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः ।
सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजं ॥ १२ ॥
भगवंश्चापहस्तोऽहं सरयूतीरमागतः ।
जिघांसुः श्वापदं किंचिन्निपाने वागतं गजं ॥ १३ ॥
ततः श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः ।
द्विपोऽयमिति मत्वा हि बाणेनाभिहतो मया ॥ १४ ॥

गत्वा नद्यास्ततस्तीरमपश्यमिषुणा हृदि ।
विनिर्भिन्नं गतप्राणं शयानं भुवि तापसं ॥ १५ ॥
ततस्तस्यैव वचनादुपेत्य परितप्यतः ।
स मया सहसा बाण उद्धृतो मर्मतस्तदा ॥ १६ ॥
स चोद्धृतेन बाणेन तत्रैव स्वर्गमास्थितः ।
भगवन्तावुभौ शोचन् वृद्धाविति विलप्य च ॥ १७ ॥
अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया ।
शेषमेवंगते यत् स्यात् तत् प्रसीदतु मे मुनिः ॥ १८ ॥
स तच्छ्रुत्वा वचः क्रूरं मयोक्तमघशंसिना ।
नाशकत् तीव्रमायासमकर्तुं भगवानृषिः ॥ १९ ॥
स बाष्पपूर्णवदनो निःश्वसन् शोकमूर्छितः ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितं ॥ २० ॥
यद्येतदशुभं कर्म न स्म मे ऽकथयः स्वयं ।
फलेन्मूर्धा स्म ते राजन् सद्यः शतसहस्रधा ॥ २१ ॥
क्षत्रियेण वधो राजन् वानप्रस्थे विशेषतः ।
ज्ञानपूर्वकृतः स्थानाच्च्यावयेदपि वज्रिणं ॥ २२ ॥
* सप्तधा तु फलेन्मूर्धा मुनौ तपसि तिष्ठति ।
* ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मचारिणि ॥ २३ ॥
अज्ञानाद्धि कृतं यस्मादिदं तेनैव जीवसि ।
अपि ह्यद्य कुलं न स्याद्राघवाणां कुतो भवान् ॥ २४ ॥

नय नौ नृप तं देशमिति मां चाभ्यभाषत ।
अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनं ॥ २५ ॥
रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससं ।
शयानं भुवि निःसंज्ञं धर्मराजवशं गतं ॥ २६ ॥
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ ।
अस्पर्शयं हतं पुत्रं तं मुनिं सह भार्यया ॥ २७ ॥
तं पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनं ।
निपेततुः शरीरेऽस्य पिता चैनमुवाच ह ॥ २८ ॥
नाभिवादयसे माद्य न च मामभिभाषसे ।
किं च शेषे तु भूमौ त्वं वत्स किं कुपितो ह्यसि ॥ २९ ॥
नन्वहं तेऽप्रियः पुत्र मातरं पश्य धार्मिक ।
किं नु नालिङ्गसे पुत्र सुकुमारवचो वद ॥ ३० ॥
कस्य वापररात्रेऽहं श्रोष्यामि हृदयंगमं ।
अधीयानस्य मधुरं शास्त्रं वान्यद्विशेषतः ॥ ३१ ॥
को मां संध्यामुपास्यैव स्नात्वा हुतहुताशनः ।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितं ॥ ३२ ॥
कन्दमूलफलं हृत्वा को मां प्रियमिवातिथिं ।
भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकं ॥ ३३ ॥
इमामन्धां च वृद्धां च मातरं ते तपस्विनीं ।
कथं वत्स भरिष्यामि कृपणां पुत्रगर्धिनीं ॥ ३४ ॥

तिष्ठ मा मा गमः पुत्र यमस्य सदनं प्रति ।
श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३५ ॥
उभावपि च शोकार्त्तावनाथौ कृपणौ वने ।
क्षिप्रमेव गमिष्यावस्त्वया हीनौ यमक्षयं ॥ ३६ ॥
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीं ।
क्षमतां धर्मराजो मे बिभृयात् पितरावयं ॥ ३७ ॥
दातुमर्हति धर्मात्मा लोकपालो महायशाः ।
ईदृशस्य ममाक्षय्यामेकामभयदक्षिणां ॥ ३८ ॥
अपापो ऽसि यथा पुत्र निहतः पापकर्मणा ।
तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनां ॥ ३९ ॥
यां हि शूरा गतिं यान्ति संग्रामेष्वनिवर्तिनः ।
हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥ ४० ॥
यां गतिं सगरः शैव्यो दिलीपो जनमेजयः ।
नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ॥ ४१ ॥
या गतिः सर्वसाधूनां स्वाध्यायात् तपसश्च या ।
भूमिदस्याहिताग्नेश्च एकपत्नीव्रतस्य च ॥ ४२ ॥
गोसहस्रप्रदातॄणां गुरुसेवाभृतामपि ।
देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ॥ ४३ ॥
न हि त्वस्मिन् कुले जातो गच्छत्यकुशलां गतिं ।
स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४४ ॥

एवं स कृपणं तत्र पर्यदेवयतासकृत् ।
ततोऽस्मि कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४५ ॥
स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः ।
(ततं शरीरमुत्सृज्य) पितरौ वाक्यमब्रवीत् ॥ ४६ ॥
स्थानमस्मि महत् प्राप्तो भवतोः परिचारणात् ।
भवन्तावपि च क्षिप्रं मम मूलमुपैष्यतः ॥ ४७ ॥
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता ।
स्वर्गमध्यरुहत् क्षिप्रं शक्रेण सह धर्मवित् ॥ ४८ ॥
स कृत्वाथोदकं तूर्णं तापसः सह भार्यया ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितं ॥ ४९ ॥
अद्यैव जहि मां राजन् मरणे नास्ति मे व्यथा ।
यः शरेणैकपुत्रं मां त्वमकार्षीरपुत्रकं ॥ ५० ॥
त्वया तु यदविज्ञानान्निहतो मे स बालकः ।
तेन त्वामपि शप्स्येऽहं सुदुःखमतिदारुणं ॥ ५१ ॥
पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतं ।
एवं त्वं पुत्रशोकेन राजन् कालं करिष्यसि ॥ ५२ ॥
अज्ञानात् तु हतो यस्मात् क्षत्रियेण त्वया मुनिः ।
तस्मात् त्वां नाविशत्याशु ब्रह्महत्या नराधिप ॥ ५३ ॥
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति ।
जीवितान्तकरो घोरो दातारमिव दक्षिणा ॥ ५४ ॥

एवं शापं मयि न्यस्य विलप्य करुणं बहु ।
चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५५ ॥
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयं ।
तदा बाल्यात् कृतं देवि शब्दवेध्यानुशिक्षिणा ॥ ५६ ॥
तस्यायं कर्मणो देवि विपाकः समुपस्थितः ।
अपथ्यैः सह संभुक्तो व्याधिरन्नरसे यथा ॥ ५७ ॥
तस्मान्मामागतं भद्रे तस्योदारस्य तद्वचः ।
यदहं पुत्रशोकेन संत्यजिष्यामि जीवितं ॥ ५८ ॥
इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह तु भूमिपः ।
चक्षुर्भ्यां त्वां न पश्यामि कौशल्ये साधु मां स्पृश ॥ ५९ ॥
यदि मां संस्पृशेद्रामः सकृदन्वारभेत वा ।
धनं वा यौवराज्यं वा जीवेयमिति मे मतिः ॥ ६० ॥
न तन्मे सदृशं देवि यन्मया राघवे कृतं ।
सदृशं तत् तु तस्यैव यदनेन कृतं मयि ॥ ६१ ॥
दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः ।
कश्च प्रव्राज्यमानो वा नासूयेत् पितरं सुतः ॥ ६२ ॥
चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ।
दूता वैवस्वतस्यैते कौशल्ये त्वरयन्ति मां ॥ ६३ ॥
अतस्तु किं दुःखतरं यदहं जीवितक्षये ।
न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमं ॥ ६४ ॥

तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः ।
उच्छोषयति वै प्राणान् वारिस्तोकमिवातपः ॥ ६५ ॥
न ते मनुष्या देवास्ते ये चारु शुभकुण्डलं ।
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ॥ ६६ ॥
कौशल्ये चित्तमोहेन हृदयं सीदतीव मे ।
वेदये न च संयुक्तान् शब्दस्पर्शरसानहं ॥ ६७ ॥
चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ।
क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा ॥ ६८ ॥
अयमात्मभवः शोको मामनाथमचेतनं ।
संसाधयति वेगेन यथा कूलं नदीरयः ॥ ६९ ॥
हा राघव महाबाहो हा ममायासनाशन ।
हा पितृप्रिय मे नाथ हा ममासि गतः सुत ॥ ७० ॥
हा कौशल्ये न पश्यामि हा सुमित्रे तपस्विनि ।
हा नृशंसे ममामित्रे कैकेयि कुलपांसनि ॥ ७१ ॥
इति मातुश्च रामस्य सुमित्रायाश्च संनिधौ ।
राजा दशरथः शोचन् जीवितान्तमुपागमत् ॥ ७२ ॥

इत्ययोध्याकाण्डे दशरथप्राणत्यागो नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

## CAPUT LXV.

### GYNAECEI EIULATUS.

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि ।
वन्दिनः पर्युपातिष्ठंस्तत् पार्थिवनिवेशनं ॥ १ ॥
सूताः परमसंस्कारा मागधाश्चोत्तमश्रुताः ।
गायकाः स्तुतिशीलाश्च निनदन्तः पृथक् पृथक् ॥ २ ॥
राजानं स्तुवतां तेषामुत्तमाभिहिताशिषां ।
प्रासादाभोगविस्तीर्णः स्तुतिशब्दोऽभ्यवर्तत ॥ ३ ॥
ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः ।
अपदानान्युदाहृत्य पाणिवादान्यवादयन् ॥ ४ ॥
तेन शब्देन विहगाः प्रतिबुद्धाश्च सस्वनुः ।
शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥ ५ ॥
व्याहृताः पुण्यशब्दाश्च वीणानां चापि निस्वनाः ।
आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ॥ ६ ॥
ततः शुचिसमाचाराः पर्युपस्थानकोविदाः ।
स्त्रीवर्षधरभूयिष्ठा उपतस्थुर्यथा पुरा ॥ ७ ॥

हरिचन्दनसंपृक्तमुदकं काञ्चनैर्घटैः ।
आनिन्युः स्नातशिक्षाज्ञा यथाकालं यथाविधि ॥ ८ ॥
मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् ।
उपानिन्युस्तथा पुण्याः कुमारीबहुलाः स्त्रियः ॥ ९ ॥
सर्वलक्षणसंपन्नं सर्वं विधिवदर्चितं ।
सर्वं सुगुणलक्ष्मीवत् तदभूदाभिहारिकं ॥ १० ॥
तत् तु सूर्योदयं यावत् सर्वं परिसमुत्सुकं ।
तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितं ॥ ११ ॥
अथ याः कोशलेन्द्रस्य शयनं प्रत्यनन्तराः ।
ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२ ॥
न ह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ।
ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टासंचलनादिषु ॥ १३ ॥
ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ।
प्रतिस्रोतस्तृणाग्राणां सदृशं संचकाशिरे ॥ १४ ॥
अथ संदेह्यमानानां दृष्ट्वा स्पृष्ट्वा च पार्थिवं ।
यत् तदाशङ्कितं पापं तस्य जज्ञे विनिश्चयः ॥ १५ ॥
कौशल्या च सुमित्रा च पुत्रशोकपराजिते ।
प्रसुप्ते न प्रबुध्येते यथा कालसमन्विते ॥ १६ ॥
निष्प्रभा च विवर्णा च सन्ना शोकेन संनता ।
न व्यराजत कौशल्या तारेव तिमिरावृता ॥ १७ ॥

कौशल्यानन्तरं राज्ञः सुमित्रा तदनन्तरं ।
न स्म विभ्राजते देवी शोकाश्रुलुलिताननाः ॥ १८ ॥
ते च दृष्ट्वा तदा सुप्ते उभे देव्यौ च तं नृपं ।
सुप्तमेवोद्गतप्राणमन्तःपुरममन्यत ॥ १९ ॥
ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः ।
करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥ २० ॥
तासामाक्रन्दशब्देन सहसोद्गतलोचनाः ।
कौशल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥ २१ ॥
कौशल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवं ।
हा भर्तेति परिक्रुश्य पेपतुर्धरणीतले ॥ २२ ॥
सा कोशलेन्द्रदुहिता चेष्टमाना महीतले ।
न भ्राजते रजोध्वस्ता तारेव गगनच्युता ॥ २३ ॥
नृपे शान्तगुणे जाते कौशल्यां पतितां भुवि ।
अपश्यंस्ताः स्त्रियः सर्वा हतां नागवधूमिव ॥ २४ ॥
ततः सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः ।
रुदन्त्यः शोकसंतप्ता निपेतुर्गतचेतनाः ॥ २५ ॥
ताभिः स बलवान् नादः क्रोशन्तीभिरनुद्रुतः ।
येन स्फीतीकृतो भूयस्तद्गृहं समनादयत् ॥ २६ ॥
तत् परित्रस्तसंभ्रान्तं पर्युत्सुकजनाकुलं ।
सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवं ॥ २७ ॥

सभ्यो निपतितानन्दं दीनविक्लवदर्शनं ।
बभूव नरदेवस्य सद्म दिष्टान्तमेयुषः ॥ २८ ॥

इत्ययोध्याकाण्डे अन्तःपुराक्रन्दनं नाम पञ्चषष्टितमः सर्गः
॥ ६५ ॥

---

## CAPUT LXVI.

### FUNUS DASARATHAE SEPOSITUM.

तमग्निमिव संशान्तमम्बुहीनमिवार्णवं ।
गतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य भूमिपं ॥ १ ॥
कौशल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता ।
उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २ ॥
सकामा भव कैकेयि भुंक्ष्व राज्यमकण्टकं ।
त्यक्ता राजानमेकाग्या नृशंसे दुष्टचारिणि ॥ ३ ॥
विहाय मां गतो रामो भर्ता च स्वर्गतो मम ।
विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४ ॥
भर्तारं तु परित्यज्य का स्त्री दैवतमात्मनः ।
इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५ ॥
न लुब्धो बुध्यते दोषान् किंपाकमिव भक्षयन् ।
कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतं ॥ ६ ॥

अनियोगये नियुक्तेन राज्ञा रामं विवासितं ।
सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७ ॥
वृद्धश्चैवाल्पपुत्रश्च वैदेहीमनुचिन्तयन् ।
सोऽपि शोकसमाविष्टो नूनं त्यक्ष्यति जीवितं ॥ ८ ॥
विदेहराजस्य सुता तथा दीना तपस्विनी ।
दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९ ॥
नदतां भीमघोषाणां निशासु मृगपक्षिणां ।
निशम्य नादं संत्रस्ता राघवं संश्रयिष्यति ॥ १० ॥
स मामनाथां विधवां नाद्य जानाति धार्मिकः ।
रामः कमलपत्राक्षो जीवनाशमितो गतः ॥ ११ ॥
साहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता ।
इदं शरीरमालिंग्य प्रवेक्ष्यामि हुताशनं ॥ १२ ॥
तां ततः संपरिष्वज्य विलपन्तीं तपस्विनीं ।
व्यपनिन्युः सुदुःखार्त्तां कौशल्यां व्यवहारिकाः ॥ १३ ॥
तैलद्रोण्यां तदामात्याः संवेश्य जगतीपतिं ।
राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरं ॥ १४ ॥
न तु संकलनं राज्ञो विना पुत्रेण मन्त्रिणः ।
सर्वज्ञाः कर्तुमीषुस्ते ततो रक्षन्ति भूमिपं ॥ १५ ॥
तैलद्रोण्यां तु सचिवैः शायितं तं नराधिपं ।
हा मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः पर्यदेवयन् ॥ १६ ॥

बाहूनुच्छ्रित्य कृपणा नेत्रप्रस्रवणैर्मुखैः ।
उरः शिरश्च जानूनि जघ्नुः करतलैर्मुहुः ॥ १७ ॥
हा महाराज रामेण सततं प्रियवादिना ।
विहीनाः सत्यसंधेन किमर्थं विजहासि नः ॥ १८ ॥
कैकेय्या दुष्टभावाया राघवेण विवर्जिताः ।
कथं सपत्न्या वत्स्यामः समीपे विधवा वयं ॥ १९ ॥
यया तु राजा रामश्च लक्ष्मणश्च महाबलः ।
सीतया सह संत्यक्ताः सा कमन्यं न हास्यति ॥ २० ॥
ता बाष्पेण च संवीताः शोकेन विपुलेन च ।
व्यचेष्टन्त निरानन्दा राघवस्य वरस्त्रियः ॥ २१ ॥
निशा नक्षत्रहीनेव स्त्रीव भर्तृविवर्जिता ।
पुरी नाराजतायोध्या हीना राज्ञा महात्मना ॥ २२ ॥
गते तु शोकात् त्रिदिवं नराधिपे ।
महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचारः सहसा गतो रविः ।
प्रवृत्तचारा रजनी ह्युपस्थिता ॥ २३ ॥

इत्ययोध्याकाण्डे दशरथसंक्रमणं नाम षट्षष्टितमः सर्गः
॥ ६६ ॥

## CAPUT LXVII.

### REGUM LAUDATIO.

व्यतीतायां तु शर्व्वर्यामादित्यस्योदये ततः ।
समेत्य राज्यकर्त्तारः सभामीयुर्द्विजातयः ॥ १ ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः ।
कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥ २ ॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् ।
वशिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितं ॥ ३ ॥
अतीता शर्व्वरी दुःखं या नो वर्षशतोपमा ।
अस्मिन् पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ४ ॥
स्वर्गस्थश्च महाराजो रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ५ ॥
उभौ भरतशत्रुघ्नौ केकयेषु परंतपौ ।
पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ६ ॥
इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयतां ।
अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात् ॥ ७ ॥
नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ८ ॥

नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ ९ ॥
नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १० ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्युपासते दान्ता ब्राह्मणाः संशितव्रताः ॥ ११ ॥
नाराजके जनपदे प्रहृष्टनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्तन्ते जनहर्षणाः ॥ १२ ॥
नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरभिरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १३ ॥
नाराजके जनपदे उद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १४ ॥
नाराजके जनपदे वाहनैः शीघ्रगामिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥ १५ ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १६ ॥
नाराजके जनपदे बद्धघण्टाविषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ १७ ॥
नाराजके जनपदे शरान् संततमस्यतां ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ १८ ॥

नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ १९ ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥ २० ॥
नाराजके जनपदे योगक्षेमं प्रवर्तते ।
न चाप्यराजके सेना शत्रून् विषहते युधि ॥ २१ ॥
नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तः प्रतिष्ठन्ते वनेषूपवनेषु च ॥ २२ ॥
नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २३ ॥
नाराजके जनपदे चन्दनागुरुभूषिताः ।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥ २४ ॥
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनं ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकं ॥ २५ ॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ २६ ॥
नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परं ॥ २७ ॥
ये तु संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ २८ ॥

यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ २९ ॥
राजा सत्यं च धर्मश्च राजकुलवतां कुलं ।
राजा माता पिता चैव राजा हितकरो नृणां ॥ ३० ॥
अन्धं तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३१ ॥
जीवत्यपि महाराजे तवैव वचनं वयं ।
नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ ३२ ॥
स नः समीक्ष्य द्विजवर्य वृत्तं ।
नृपं विना राष्ट्रमरण्यभूतं ।
कुमारमिक्ष्वाकुसुतं तथान्यं ।
त्वमेव राजानमिहाभिषिञ्च ॥ ३३ ॥

इत्ययोध्याकाण्डे राजप्रशंसा नाम सप्तषष्टितमः सर्गः
॥ ६७ ॥

---

## CAPUT LXVIII.

### NUNTIORUM ITER.

तेषां तद्वचनं श्रुत्वा वशिष्ठः प्रत्युवाच ह ।
मित्रामात्यजनान् सर्वान् ब्राह्मणांस्तानिदं वचः ॥ १ ॥
यदसौ मातुलकुले पुरे राजगृहे सुखी ।
भरतो वसति भ्रात्रा शत्रुघ्नेन समन्वितः ॥ २ ॥
तत्र शीघ्रं जवना दूता गच्छन्तु त्वरितैर्हयैः ।
आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयं ॥ ३ ॥
गच्छन्त्विति ततः सर्वे वशिष्ठं वाक्यमब्रुवन् ।
तेषां तु वचनं श्रुत्वा वशिष्ठो वाक्यमब्रवीत् ॥ ४ ॥
एहि सिद्धार्थ विजय जयन्ताशोकनन्दन ।
श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५ ॥
पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः ।
त्यक्तशोकैरिदं वाच्यः शासनाद्भरतो मम ॥ ६ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ७ ॥
मा चास्मै प्रोषितं रामं मा चास्मै पितरं मृतं ।
भवन्तः शंसिषुर्गत्वा राघवाणामितः क्षयं ॥ ८ ॥

कौशेयानि च वस्त्राणि भूषणानि वराणि च ।
क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥ ९ ॥
दत्तपथ्याशना दूता जग्मुः स्वं स्वं निवेशनं ।
केकयांस्ते गमिष्यन्तो हयानारुह्य संमतान् ॥ १० ॥
ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरं ।
वशिष्ठेनाभ्यनुज्ञाता दूताः संत्वरितं ययुः ॥ ११ ॥
न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति ।
निषेवमाणास्ते जग्मुर्नदीं मध्येन मालिनीं ॥ १२ ॥
ते हास्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः ।
पाञ्चालदेशमासाद्य मध्येन कुरुजाङ्गलं ॥ १३ ॥
सरांसि च सुफुल्लानि नदीश्च विमलोदकाः ।
निरीक्षमाणा जग्मुस्ते दूताः कार्यवशाद्द्रुतं ॥ १४ ॥
ते प्रसन्नोदकां दिव्यां नानाविहगसेवितां ।
उपातिजग्मुर्वेगेन शरदण्डां जलाकुलां ॥ १५ ॥
निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनं ।
अभिगम्याभिवाद्यं तं कुलिङ्गां प्राविशन् पुरीं ॥ १६ ॥
अभिकालं ततः प्राप्य ततो योधिवनाच्च्युताः ।
पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीं ॥ १७ ॥
अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान् वेदपारगान् ।
ययुर्मध्येन बाह्लीकान् सुदामानं च पर्वतं ॥ १८ ॥

विष्णोः पदं प्रेक्षमाणा विपाशां चापि शाल्मलीं ।
नदीर्वापीस्तटाकानि पल्वलानि सरांसि च ॥ १९ ॥
पश्यन्तो विविधांश्चापि सिंहव्याघ्रमृगद्विपान् ।
ययुः पथातिमहता शासनं भर्तुरीप्सवः ॥ २० ॥
ते श्रान्तवाहना दूता विकृष्टेन सता पथा ।
गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा ॥ २१ ॥
भर्तुः प्रियार्थं कुलरक्षणार्थं ।
भर्तुश्च वंशस्य परिग्रहार्थं ।
अहेडमानास्त्वरया स्म दूता ।
रात्र्यां तु ते तत् पुरमेव याताः ॥ २२ ॥

इत्ययोध्याकाण्डे दूतप्रस्थानं नाम अष्टषष्टितमः सर्गः ॥ ६८ ॥

## CAPUT LXIX.

### SOMNIUM A BHARATA VISUM.

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीं ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १ ॥
अनिष्टावेदिनं स्वप्नं दृष्ट्वा च भरतस्तदा ।
संस्मरन् पितरं वृद्धं सुभृशं पर्यतप्यत ॥ २ ॥
तप्यमानं तमाज्ञाय वयस्याः प्रियवादिनः ।
आयासं विनयिष्यन्तः सभायां चक्रिरे कथाः ॥ ३ ॥
वादयन्ति तदा शान्तिं लासयन्त्यपरे तथा ।
नाटकान्यपरे प्राहुर्हास्यानि विविधानि च ॥ ४ ॥
स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः ।
गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५ ॥
तमब्रवीत् प्रियसखो भरतं सखिभिर्वृतं ।
सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥ ६ ॥
एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह ।
शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतं ॥ ७ ॥
स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजं ।
पतन्तमद्रिशिखरात् कलुषे गोमये ह्रदे ॥ ८ ॥

प्लवमानश्च मे दृष्टः स तस्मिन् गोमये ह्रदे ।
पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः ॥ ९ ॥
ततस्तिलोदनं भुक्त्वा पुनः पुनरधःशिराः ।
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवावगाहत ॥ १० ॥
स्वप्ने ऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि ।
उपरुद्धां च जगतीं तमसेव समावृतां ॥ ११ ॥
अवदीर्णां च पृथिवीं शुष्कांश्च विविधान् द्रुमान् ।
अहं पश्यामि विध्वस्तान् सधूमांश्चैव पर्वतान् ॥ १२ ॥
औपवाह्यस्य नागस्य विषाणं शकलीकृतं ।
सहसा चापि संशान्ता ज्वलिता जातवेदसः ॥ १३ ॥
पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससं ।
प्रहरन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १४ ॥
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः ।
रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १५ ॥
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ।
प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६ ॥
एवमेतन्मया दृष्टमिमां रात्रिं भयावहं ।
अहं रामो ऽथवा राजा लक्ष्मणो वा मरिष्यति ॥ १७ ॥
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि ।
अचिरात् तस्य धूमाग्रं चितायां संप्रदृश्यते ॥ १८ ॥

एतन्निमित्तं दीनोऽहं न वचः प्रतिपूजये ।
शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः ॥ १९ ॥
भ्रष्टश्च स्वरयोगो मे छाया चोपहता मम ।
जुगुप्सामीव चात्मानं न च पश्यामि कारणं ॥ २० ॥
इमां हि दुःस्वप्नगतिं निशम्य तां ।
अनेकरूपामवितर्कितां पुरा ।
भयं महन्मद्हृदयान्न याति वै ।
विचिन्त्य राजानमचिन्त्यदर्शनं ॥ २१ ॥

इत्ययोध्याकाण्डे भरतस्वप्नदर्शनं नाम एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## CAPUT LXX.

### BHARATAE PROFECTIO.

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ।
प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरं ॥ १ ॥
समागम्य च राज्ञा ते राजपुत्रेण चार्चिताः ।
राज्ञः पादौ गृहीत्वा च तमूचुर्भरतं वचः ॥ २ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३ ॥

इमानि च महार्हाणि वस्त्राण्याभरणानि च ।
प्रतिगृह्य विशालाक्ष मातुलस्य च दापय ॥ ४ ॥
अत्र विंशतिः कोट्यस्तु नृपतेर्मातुलस्य ते ।
दश कोट्यश्च संपूर्णास्तथैवेमा नृपात्मज ॥ ५ ॥
प्रतिगृह्य तु तत् सर्वमनुरक्तः सुहृज्जने ।
दूतानुवाच भरतः कामैः संप्रतिपूज्य तान् ॥ ६ ॥
कच्चित् स कुशली राजा पिता दशरथो मम ।
कच्चिदारोग्यता रामे लक्ष्मणे वा महात्मनि ॥ ७ ॥
कच्चिदम्बा कुशलिनी कौशल्या धर्मचारिणी ।
माता रामस्य धर्मज्ञा भर्तृव्रतपरायणा ॥ ८ ॥
कच्चित् सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या ।
शत्रुघ्नस्यापि वीरस्य सारोगा चापि मध्यमा ॥ ९ ॥
आत्मकामा सदाचण्डी क्रोधना प्राज्ञमानिनी ।
अरोगा चापि कैकेयी माता मे किमुवाच ह ॥ १० ॥
एवमुक्तास्तु ते दूता भरतेन महात्मना ।
ऊचुः संप्रश्रितं वाक्यमिदं तं भरतं तदा ॥ ११ ॥
कुशलास्ते नरव्याघ्र येषां कुशलमिच्छसि ।
श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥ १२ ॥
इत्युक्तो भरतो दूतैः प्रत्युवाच वचस्तदा ।
एवं भवतु गच्छामि मुहूर्तं परिपाल्यतां ॥ १३ ॥

एवमुक्त्वा तु तान् दूतान् भरतः पार्थिवात्मजः ।
दूतैः संचोदितो वाक्यं मातामहमुवाच ह ॥ १४ ॥
राजन् पितुर्गमिष्यामि सकाशं दूतचोदितः ।
पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि ॥ १५ ॥
भरतेनैवमुक्तस्तु नृपो मातामहस्तदा ।
तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवं ॥ १६ ॥
गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया ।
मातरं कुशलं ब्रूयाः पितरं च परंतप ॥ १७ ॥
पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः ।
तौ च तात महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥
तस्मै हस्त्युत्तमांश्चित्रान् कम्बलानजिनानि च ।
सत्कृत्य केकयो राजा भरताय ददौ धनं ॥ १९ ॥
रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च ।
सत्कृत्य कैकयीपुत्रं केकयो धनमादिशत् ॥ २० ॥
तथामात्यानभिप्रेतान् विश्वास्यांश्च गुणान्वितान् ।
ददावश्वपतिः शीघ्रं भरतायानुयायिनः ॥ २१ ॥
ऐरावतानैन्द्रशिरान् नागान् वै प्रियदर्शनान् ।
खरान् शीघ्रान् सुसंयुक्तान् मातुलोऽस्मै धनं ददौ ॥
अन्तःपुरेऽतिसंवृद्धान् व्याघ्रवीर्यबलान्वितान् ।
दंष्ट्रायुधान् महाकायान् शुनश्चोपायनं ददौ ॥ २३ ॥

स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत ।
भरतः केकयीपुत्रो गमनत्वरया तदा ॥ २४ ॥
बभूव ह्यस्य हृदये चिन्ता सुमहती तदा ।
त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५ ॥
स स्ववेश्माभ्यतिक्रम्य नरनागाश्वसंकुलं ।
प्रपेदे सुमहच्छ्रीमान् राजमार्गमनुत्तमं ॥ २६ ॥
अभ्यतीत्य ततो ऽपश्यदन्तःपुरमनुत्तमं ।
ततस्तद्भरतः श्रीमानाविवेशानिवारितः ॥ २७ ॥
स मातामहमापृच्छ्य मातुलं च युधाजितं ।
रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८ ॥
रथान् मण्डलचक्रांश्च योजयित्वा परं शतं ।
उष्ट्रगोऽश्वखरैर्भृत्या भरतं यान्तमन्वयुः ॥ २९ ॥

वलेन गुप्तो भरतो महात्मा ।
सहार्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रुं ।
गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३० ॥

इत्ययोध्याकाण्डे भरतप्रयाणं नाम सप्ततितमः सर्गः
॥ ७० ॥

## CAPUT LXXI.

### BHARATAE REDITUS.

स प्राङ्मुखो राजगृहादभिनिर्याय राघवः ।
ततः सुदामां द्युतिमान् संतीर्यावेक्ष्य तां नदीं ॥ १ ॥
ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीं ।
शतद्रूमतरच्छ्रीमान् नदीमिक्ष्वाकुनन्दनः ॥ २ ॥
ऐलधाने नदीं तीर्त्वा प्राप्य चापरपर्पटान् ।
शिलामाकुर्वतीं तीर्त्वा आग्नेयं शल्यकर्तनं ॥ ३ ॥
सत्यसंधः शुचिर्भूत्वा प्रेक्षमाणः शिलावहां ।
अत्ययात् स महाशैलान् वनं चैत्ररथं प्रति ॥ ४ ॥
सरस्वतीं च गङ्गां च युग्मेन प्रतिपद्य च ।
उत्तरं वीरमत्स्यानां भारुण्डं प्राविशद्वनं ॥ ५ ॥
वेगिनीं च कलिन्दाख्यां ह्लादिनीं पर्वतावृतां ।
यमुनां प्राप्य संतीर्णो बलमाश्वासयत् तदा ॥ ६ ॥
शीतीकृत्वा तु गात्राणि क्लान्तानाश्वास्य वाजिनः ।
तत्र स्नात्वा च पीत्वा च प्रायादादाय चोदकं ॥ ७ ॥
राजपुत्रो महारण्यमनभीक्ष्णोपसेवितं ।
भद्रो भद्रेण यानेन मारुतः खमिवात्ययात् ॥ ८ ॥

भागीरथीं दुष्प्रतरां सोऽंशुधाने महानदीं ।
उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे ॥ ९ ॥
स गङ्गां प्राग्वटे तीर्त्वा समायात् कुटिकोष्टिकां ।
सबलस्तां स तीर्त्वाथ समायाद्धर्मवर्धनं ॥ १० ॥
तोरणं दक्षिणार्द्धेन जम्बुप्रस्थमुपागमत् ।
वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११ ॥
तत्र रम्ये वने वासं कृत्वासौ प्राङ्मुखो ययौ ।
उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः ॥ १२ ॥
स तांस्तु प्रियकान् प्राप्य शीघ्रानास्थाय वाजिनः ।
अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥ १३ ॥
वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तानिकां नदीं ।
अन्या नदीश्च विविधाः पार्वतीयैस्तुरंगमैः ॥ १४ ॥
हस्तिपृष्ठकमासाद्य कुटिकामत्यवर्तत ।
ततार च नरव्याघ्रो लोहित्ये स कपीवतीं ॥ १५ ॥
एकशाले स्थाणुमतीं विनते गोमतीं नदीं ।
कलिङ्गनगरे चापि प्राप्य सालवनं तदा ॥ १६ ॥
वनं स समतीत्याशु शर्वर्यामरुणोदये ।
अयोध्यां मनुना राज्ञा निर्मितां स ददर्श ह ॥ १७ ॥
तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि ।
अयोध्यामग्रतो दृष्ट्वा रथे सारथिमब्रवीत् ॥ १८ ॥

एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ।
अयोध्या दृश्यते दूरात् सारथे पाण्डुमृत्तिका ॥ १९ ॥
अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान् ।
समन्तान्नरनारीणां तमद्य न शृणोम्यहं ॥ २० ॥
न चात्र यान्निर्दृश्यन्ते न गजैर्न च वाजिभिः ।
निर्यान्तो वाभियान्तो वा नरमुख्या यथा पुरा ॥ २१ ॥
उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च ।
जनानां रतिसंयोगेष्वत्यन्तगुणवन्ति च ॥ २२ ॥
तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः ।
स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः ॥ २३ ॥
नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणां ।
सुरक्तां मधुरां वाणीं कलं व्याहरतां मुहुः ॥ २४ ॥
चन्दनागुरुसंपृक्तो धूपसंमूर्छितोऽतुलः ।
प्रवाति पवनः श्रीमान् किंनु नाद्य यथा पुरा ॥ २५ ॥
भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः ।
किमद्य शब्दो विरतः सदादीनगतिः पुरा ॥ २६ ॥
अनिष्टानि च पापानि पश्यामि विविधानि च ।
निमित्तान्यमनोज्ञानि तेन सीदति मे मनः ॥ २७ ॥
सर्वथा कुशलं सूत दुर्लभं मम बन्धुषु ।
तथा ह्यसति संमोहे हृदयं मेऽवसीदति ॥ २८ ॥

विषण्णः श्रान्तहृदयस्त्रस्तः संलुलितेन्द्रियः ।
भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालितां ॥ २९ ॥
द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ।
द्वाःस्थैरुत्थाय विजयमुक्तस्तैः सहितो ययौ ॥ ३० ॥
स त्वनेकाग्रहृदयो द्वाःस्थं प्रत्यर्च्य तं जनं ।
सूतमश्वपतेः क्लान्तमब्रवीत् तत्र राघवः ॥ ३१ ॥
किमहं त्वरयानीतः कारणेन विनानघ ।
अशुभाशङ्कि हृदयं शीलं च पततीव मे ॥ ३२ ॥
श्रुता नो यादृशाः पूर्वं नृपतीनां विनाशने ।
आकारांस्तानहं सर्वानिह पश्यामि सारथे ॥ ३३ ॥
संमार्जनविहीनानि परुषाण्युपलक्षये ।
असंयतकवाटानि श्रीविहीनानि सर्वशः ॥ ३४ ॥
बलिकर्मविहीनानि धूपसंमोदनेन च ।
अनासितकुटुम्बानि कुटुम्बिभवनानि वै ॥ ३५ ॥
अपेतमाल्यशोभानि असंमृष्टाजिराणि च ।
देवागाराणि शून्यानि न भान्तीह यथा पुरा ॥ ३६ ॥
देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्यस्तथैव च ।
माल्यापणेषु राजन्ते नाद्य पण्यानि वै तथा ॥ ३७ ॥
मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशं ।
सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे ॥ ३८ ॥

इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः ।
तान्यनिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ॥ ३१ ॥

इत्ययोध्याकाण्डे भरतप्रत्यागमो नाम एकसप्ततितमः सर्गः ॥ ७१ ॥

---

## CAPUT LXXII.

### PERCUNCTATIO A BHARATA INSTITUTA.

अपश्यंस्तु ततस्तत्र पितरं पितुरालये ।
जगाम भरतो द्रष्टुं मातरं मातुरालये ॥ १ ॥
अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतं ।
उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनं ॥ २ ॥
स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितं ।
भरतः प्रतिजग्राह जनन्याश्चरणौ शुभौ ॥ ३ ॥
तं मूर्ध्नि समुपाघ्राय परिष्वज्य यशस्विनं ।
अङ्के भरतमारोप्य प्रष्टुं समुपचक्रमे ॥ ४ ॥
अद्य ते कतिचिद्रात्र्यश्च्युतस्यार्यकवेश्मनः ।
अपि नाध्वश्रमः शीघ्रं रथेनापततस्तव ॥ ५ ॥
आर्यकस्ते तु कुशली युधाजिन्मातुलस्तथा ।
प्रवासाच्च सुखं पुत्र सर्वं मे वक्तुमर्हसि ॥ ६ ॥

एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः ।
आचष्ट भरतः सर्वं मात्रे राजीवलोचनः ॥ ७ ॥
अद्य मे सप्तमी रात्रिश्च्युतस्यार्यकवेश्मनः ।
अम्बायाः कुशली तातो युधाजिन्मातुलश्च मे ॥ ८ ॥
यन्मे धनं च रत्नं च ददौ राजा परंतपः ।
परिश्रान्तं पथ्यभवत् ततोऽहं पूर्वमागतः ॥ ९ ॥
राजवाक्यकरैर्दूतैस्त्वर्यमाणोऽहमागतः ।
यदहं प्रष्टुमिच्छामि तदम्ब वक्तुमर्हसि ॥ १० ॥
शून्योऽयं शयनीयस्ते पर्यङ्को हेमभूषितः ।
न चायमिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मे ॥ ११ ॥
राजा भवति भूयिष्ठमिहाम्बाया निवेशने ।
तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ॥ १२ ॥
पितुर्ग्रहीष्ये पादौ च तं ममाख्याहि पृच्छतः ।
अहोस्विदम्ब ज्येष्ठायाः कौशल्याया निवेशने ॥ १३ ॥
तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियं ।
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥ १४ ॥
या गतिः सर्वभूतानां तां गतिं ते पिता गतः ।
राजा महात्मा तेजस्वी यायजूकः सतां गतिः ॥ १५ ॥
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवान् शुचिः ।
पपात सहसा भूमौ पितृशोकबलार्दितः ॥ १६ ॥

हा हतोऽस्मीति कृपणां दीनां वाचमुदीरयन् ।
निपपात महाबाहुर्बाहू विक्षिप्य वीर्यवान् ॥ १७ ॥
ततः शोकेन संविग्नः पितुर्मरणदुःखितः ।
विललाप महातेजा भ्रान्ताकुलितचेतनः ॥ १८ ॥
एतत् सुरुचिरं भाति पितुर्मे शयनं पुरा ।
शशिनेवामलं रात्रौ गगणं तोयदात्यये ॥ १९ ॥
तदिदं न विभात्यद्य विहीनं तेन धीमता ।
व्योमेव शशिना हीनं शुष्कोय इव सागरः ॥ २० ॥
. . . . . . . . . . . . . . ।
. . . . . . . . . . . . . . . . ॥ २१ ॥
बाष्पमुत्सृज्य कण्ठेन स्वात्मना परिपीडितः ।
प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतां वरः ॥ २२ ॥
तमार्तं देवसंकाशं समीक्ष्य पतितं भुवि ।
उत्थापयन्ती कैकेयी पुत्रं वचनमब्रवीत् ॥ २३ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे राजपुत्र महायशः ।
त्वद्विधा न हि शोचन्ति सन्तः सदसि संमताः ॥ २४ ॥
पालयित्वा महीं सम्यगिष्ट्वा दत्वा च ते पिता ।
दिष्टान्तं समनुप्राप्तस्तं न शोचितुमर्हसि ॥ २५ ॥
स रुदित्वा चिरं कालं भूमौ विपरिवृत्य च ।
जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥

अभिषेक्ष्यति रामं नु राजा यज्ञं नु यक्ष्यते ।
इत्यहं कृतसंकल्पो हृष्टो यात्रामयासिषं ॥ २७ ॥
तदिदं ह्यन्यथा भूतं व्यवदीर्णं मनो मम ।
पितरं यो न पश्यामि नित्यं प्रियहिते रतं ॥ २८ ॥
अम्ब केनात्यगाद्राजा व्याधिना मय्यनागते ।
धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयं ॥ २९ ॥
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् ।
उपजिघ्रेद्धि मां मूर्ध्नि तातः संनम्य सत्वरं ॥ ३० ॥
क्व स पाणिः सुखस्पर्शस्तातस्याक्लिष्टकर्मणः ।
येन मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ॥ ३१ ॥
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि संमतः ।
तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥ ३२ ॥
पिता हि भवति ज्येष्ठो धर्ममार्यस्य जानतः ।
तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ॥ ३३ ॥
धर्मविद्धर्मशीलश्च महाभागो दृढव्रतः ।
आर्ये किमब्रवीद्राजा पिता मे सत्यविक्रमः ॥ ३४ ॥
पश्चिमं साधु संदेशमिच्छामि श्रोतुमात्मनः ।
इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ॥ ३५ ॥
रामेति राजा विलपन् हा सीते लक्ष्मणेति च ।
स महात्मा परं लोकं गतो गतिमतां वरः ॥ ३६ ॥

सिद्धार्थास्तु नरा राममागतं सीतया सह ।
लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतं ॥ ३७ ॥
इतीमां पश्चिमां वाचं व्याजहार पिता तव ।
कालधर्मपरिक्षिप्तः पाशैरिव महागजः ॥ ३८ ॥
तच्छ्रुत्वा विषसादैव द्वितीयाप्रियशंसनात् ।
विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरं ॥ ३९ ॥
क्व न्विदानीं स धर्मात्मा कौशल्यानन्दवर्धनः ।
लक्ष्मणेन सह भ्रात्रा सीतया च समागतः ॥ ४० ॥
तथा पृष्टा यथातत्त्वमाख्यातुमुपचक्रमे ।
मातास्य युगपद्वाक्यमप्रियं प्रियशंसया ॥ ४१ ॥
स हि राजसुतः पुत्र चीरवासा महावनं ।
दण्डकान् सह वैदेह्या लक्ष्मणानुचरो गतः ॥ ४२ ॥
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया ।
स्वस्य वंशस्य माहात्म्यात् प्रष्टुं समुपचक्रमे ॥ ४३ ॥
कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित् ।
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४४ ॥
कच्चिन्न परदारान् वा राजपुत्रोऽभिमन्यते ।
कस्माच्च दण्डकारण्ये भ्रूणहेव विवासितः ॥ ४५ ॥
अथास्य चपला माता तत् स्वकर्म यथातथं ।
तेनैव स्त्रीस्वभावेन व्याहर्तुमुपचक्रमे ॥ ४६ ॥

न ब्राह्मणधनं किंचिद्धृतं रामेण कस्यचित् ।
न रामः परदारांश्च चक्षुर्भ्यामपि पश्यति ॥ ४७ ॥
मया तु पुत्र श्रुत्वैव रामस्यैवाभिषेचनं ।
याचितस्ते पिता राज्यं रामस्य च विवासनं ॥ ४८ ॥
स स्ववृत्तिं समास्थाय पिता ते तत् तथाकरोत् ।
रामस्तु सहसौमित्रिः प्रोषितः सह सीतया ॥ ४९ ॥
तमपश्यन् प्रियं पुत्रं महीपालो महायशाः ।
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥ ५० ॥
त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यतां ।
त्वत्कृते हि मया सर्वमिदमेवंविधं कृतं ॥ ५१ ॥
मा शोकं मा च संतापं धैर्यमाश्रय पुत्रक ।
त्वदधीना च नगरी राज्यं चैतदनामयं ॥ ५२ ॥
तत् पुत्र शीघ्रं विधिना विधिज्ञैर्-
वशिष्ठमुख्यैः सहितो द्विजेन्द्रैः ।
संकाल्य राजानमदीनसत्त्वं
आत्मानमुर्व्यामभिषेचयस्व ॥ ५३ ॥

इत्ययोध्याकाण्डे भरतप्रश्नो नाम द्विसप्ततितमः सर्गः
॥ ७२ ॥

## CAPUT LXXIII.

### Probra in Caeceidem iacta.

श्रुत्वा च पितरं वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥ १ ॥
किंनु कार्यं कृतस्येह मम राज्येन शोचतः ।
विहीनस्यात्र पित्रा च भ्रात्रा पितृसमेन च ॥ २ ॥
दुःखे मे दुःखमकरोर्व्रणे क्षारमिवादधाः ।
राजानं प्रेतभावस्थं कृत्वा रामं च तापसं ॥ ३ ॥
कुलस्य त्वमभावाय कालरात्रिरिवागता ।
अङ्गारमुपगूह्य स्म पिता मे नावबुद्धवान् ॥ ४ ॥
मृत्युमापादितो राजा त्वया मे पापदर्शिनि ।
सुखं परिहृतं मोहात् कुलेऽस्मिन् कुलपांसिनि ॥ ५ ॥
त्वां प्राप्य हि पिता मेऽद्य सत्यसंधो महायशाः ।
तीव्रदुःखाभिसंतप्तो वृत्तो दशरथो नृपः ॥ ६ ॥
कौशल्या च सुमित्रा च पुत्रशोकाभिपीडिते ।
दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ७ ॥

ननु त्वय्यार्यो ऽपि धर्मात्मा त्वयि वृत्तिमनुत्तमां ।
वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥ ८ ॥
तथा ज्येष्ठा हि मे माता कौशल्या दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥ ९ ॥
तस्याः पुत्रं महात्मानं चीरवल्कलवाससं ।
प्रस्थाप्य वनवासाय कथं पापे न शोचसे ॥ १० ॥
लुब्धाया विदितो मन्ये न ते ऽहं राघवं यथा ।
तथा ह्यनर्थो राज्यार्थं त्वया नीतो महानयं ॥ ११ ॥
ग्रहं हि पुरुषव्याघ्रावपश्यन् रामलक्ष्मणौ ।
केन शक्तिप्रभावेण राज्यं रक्षितुमुत्सहे ॥ १२ ॥
तं हि नित्यं महाराजो बलवन्तं महौजसं ।
उपाश्रितो ऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ १३ ॥
सो ऽहं कथमिमं भारं महाधुर्यसमुद्यतं ।
दम्यो धुरमिवासाद्य सहेयं केन चौजसा ॥ १४ ॥
ग्रथवा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन च ।
सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीं ॥ १५ ॥
न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयां ।
यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत् सदा ॥ १६ ॥
उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनि ।
साधुचारित्रविभ्रष्टे पूर्वेषां नो विगर्हिता ॥ १७ ॥

अस्मिन् कुले हि पूर्वेषां ज्येष्ठो राज्ये ऽभिषिच्यते ।
राज्ञामेतत् समन्तात् स्यादिक्ष्वाकूणां विशेषतः ॥ १८ ॥
तेषां धर्मैकरक्षाणां कुलचारित्रशोभिनां ।
अद्य चारित्रशौण्डीर्यं त्वां प्राप्य विनिवर्तते ॥ १९ ॥
तवापि सुमहाभागे जनेन्द्राः कुलपूर्वगाः ।
बुद्धिमोहः कथमयं संभूतस्त्वयि गर्हितः ॥ २० ॥
न तु कामं करिष्यामि तवाहं पापनिश्चये ।
यया व्यसनमारब्धं जीवितान्तकरं मम ॥ २१ ॥
एष त्विदानीमेवाहमप्रियार्थं तवानघं ।
निवर्तयिष्यामि वनाद्भ्रातरं स्वजनप्रियं ॥ २२ ॥
निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २३ ॥

इत्ययोध्याकाण्डे कैकेयीगर्हणं नाम त्रिसप्ततितमः सर्गः
॥ ७३ ॥

## CAPUT LXXIV.

### BHARATAE QUERELA.

तां तथा गर्हयित्वा तु मातरं भरतस्तदा ।
रोषेण महताविष्टः पुनरेवाब्रवीद्वचः ॥ १ ॥
राज्याद्भ्रंशस्व कैकेयि नृशंसे दुष्टचारिणि ।
परित्यक्ता हि धर्मेण मां मृतं रुदती भव ॥ २ ॥
किंनु तेऽदूषयद्राजा रामो वा भृशधार्मिकः ।
ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३ ॥
भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ।
कैकेयि नरकं गच्छ मा च भर्तुः सलोकतां ॥ ४ ॥
यत् त्वया हीदृशं पापं कृतं घोरेण कर्मणा ।
सर्वलोकप्रियं हित्वा ममाप्यापादितं भयं ॥ ५ ॥
त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः ।
अयशो जीवलोके च त्वयाहं प्रतिपादितः ॥ ६ ॥
मातृरूपे ममामित्रे नृशंसे राज्यकामुके ।
न तेऽहमभिभाष्योऽस्मि दुर्वृत्ते पतिघातिनि ॥ ७ ॥
न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः ।
राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ८ ॥

शुद्धस्वभावां सद्वृत्तां कौशल्यां पुत्रलालसां ।
विवत्सां वत्सलां कृत्वा कांल्लोकांस्त्वं गमिष्यसि ॥
किं नावबुध्यसे क्रूरे नियतं बन्धुसंश्रयं ।
ज्येष्ठं पितृसमं रामं कौशल्यायात्मसंभवं ॥ १० ॥
अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चापि जायते ।
तस्मात् प्रियतरो मातुः प्रिया एव तु बान्धवाः ॥ ११ ॥
अन्यदा किल धर्मज्ञा सुरभिः सुरसंमता ।
वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ १२ ॥
तावर्द्धदिवसं श्रान्तौ दृष्ट्वा पुत्रौ महीतले ।
रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणा ॥ १३ ॥
अधस्ताद्व्रजतस्तस्याः सुरराज्ञो महात्मनः ।
बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १४ ॥
निरीक्षमाणस्तां शक्रो ददर्श सुरभिं स्थितां ।
आकाशे विष्ठितां दीनां रुदन्तीं भृशदुःखितां ॥ १५ ॥
तां दृष्ट्वा शोकसंतप्तां वज्रपाणिर्यशस्विनीं ।
इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ १६ ॥
भयं किंचिन्न चास्मासु कुतश्चिद्विद्यते महत् ।
कुतोनिमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि ॥ १७ ॥
एवमुक्ता तु सुरभिः सुरराजेन धीमता ।
प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदा ॥ १८ ॥

शान्तं पापं न वः किंचित् कुतश्चिदमराधिप ।
अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ १९ ॥
इतो दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ ।
वध्यमानौ बलीवर्दौ कर्षकेण दुरात्मना ॥ २० ॥
मम कायात् प्रसूतौ हि दुःखितौ भारपीडितौ ।
यौ दृष्ट्वा परितप्ये ऽहं नास्ति पुत्रसमः प्रियः ॥ २१ ॥
यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् ।
तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परं ॥ २२ ॥
* इन्द्रो ह्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनं ।
* सुरभिं मन्यते दृष्ट्वा भूयसीं तामिहेश्वरः ॥ २३ ॥
यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् ।
किंपुनर्या विना रामं कौशल्या वर्तयिष्यति ॥ २४ ॥
एकपुत्रा च साध्वी च विवत्सा यत् त्वया कृता ।
तस्मात् त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ २५ ॥
अहं त्वपचितिं भ्रातुः पितुश्च सकलामिमां ।
वर्धनं यशसश्चापि करिष्यामि न संशयः ॥ २६ ॥
आनाय्य च महाबाहुं कोशलेन्द्रं महाद्युतिं ।
स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितं ॥ २७ ॥
न ह्यहं पापसंकल्पे पापे पापं त्वया कृतं ।
शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः ॥ २८ ॥

सा त्वमग्निं प्रविश वा स्वयं वा विश दण्डकान् ।
रज्जुं बद्ध्वाथ वा कण्ठे न हि ते ऽन्यत् परायणं ॥ २९ ॥
अहमप्यवनीं प्राप्ते रामे सत्यपराक्रमे ।
कृतकृत्यो भविष्यामि विप्रवासितकल्मषः ॥ ३० ॥
इति नाग इवारण्ये तोमराङ्कुशतोदितः ।
पपात भुवि संक्रुद्धो निःश्वसन्निव पन्नगः ॥ ३१ ॥

इत्ययोध्याकाण्डे भरतविलापो नाम चतुःसप्ततितमः सर्गः
॥ ७४ ॥

---

## CAPUT LXXV.

### BHARATAS CRIMEN EIURANS.

दीर्घकालात् समुत्थाय संज्ञां लब्ध्वा च वीर्यवान् ।
नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरं ॥ १ ॥
सो ऽमात्यमध्ये भरतो जननीमभ्यकुत्सयत् ।
राज्यं न कामये जातु मन्त्रये नापि मातरं ॥ २ ॥
अभिषेकं न जानामि यो ऽभूद्राज्ञा समीहितः ।
विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितो ऽवसं ॥ ३ ॥

वनवासं न जानामि रामस्याहं महात्मनः ।
विवासनं च सौमित्रेः सीतायाश्च यथाभवत् ॥ ४ ॥
तथैव क्रोशतस्तस्य भरतस्य महात्मनः ।
कौशल्या शब्दमाज्ञाय सुमित्रामिदमब्रवीत् ॥ ५ ॥
आगतः क्रूरकर्मण्याः कैकेय्या भरतः सुतः ।
तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनं ॥ ६ ॥
एवमुक्त्वा सुमित्रां सा विवर्णा मलिनाम्बरा ।
प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥ ७ ॥
स तु रामानुजश्चापि शत्रुघ्नसहितस्तदा ।
प्रतस्थे भरतो येन कौशल्याया निवेशनं ॥ ८ ॥
ततः शत्रुघ्नभरतौ कौशल्यां प्रेक्ष्य दुःखितां ।
पर्यस्वजेतां दुःखार्त्तां पतितां नष्टचेतनां ॥ ९ ॥
रुदन्तौ रुदती दुःखात् समेत्यार्या मनस्विनी ।
भरतं प्रत्युवाचेदं कौशल्या भृशदुःखिता ॥ १० ॥
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकं ।
संप्राप्तं बत कैकेय्याः शीघ्रं क्रूरेण कर्मणा ॥ ११ ॥
प्रस्थाप्य चीरवसनं पुत्रं मेऽनपकारिणं ।
कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी ॥ १२ ॥
क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति ।
हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥ १३ ॥

अथवा स्वयमेवाहं सुमित्रानुचरा सुखं ।
अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये यत्र राघवः ॥ १४ ॥
इदं हि तव विस्तीर्णं धनधान्यसमाचितं ।
हस्त्यश्वरथसंपूर्णं राज्यं निष्पातितं तया ॥ १५ ॥
इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः ।
विव्यथे भरतोऽतीव व्रणातुदेव सूचिना ॥ १६ ॥
पपात चरणौ तस्यास्तदा संभ्रान्तचेतनः ।
विलप्य बहुधासंज्ञो लब्धसंज्ञोऽभवत् पुनः ॥ १७ ॥
एवं विलपमानां तां प्राञ्जलिर्भरतः स्थितः ।
कौशल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृतां ॥ १८ ॥
आर्ये कस्मादजानन्तं गर्हसे मामकिल्बिषं ।
विपुलां तु मम प्रीतिं स्थिरां जानासि राघवे ॥ १९ ॥
कृतशास्त्रानुगा बुद्धिर्मा भूत् तस्य कदाचन ।
सत्यसंधः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ २० ॥
प्रैष्यं पापीयसां यातु सूर्यं च प्रतिमेहतु ।
हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २१ ॥
परिपालयमानाय राज्ञे भूतानि पुत्रवत् ।
तस्मै स द्रुह्यतां पापो यस्यार्योऽनुमते गतः ॥ २२ ॥
बलिषड्भागमुद्धृत्य नृपस्यारक्षितुः प्रजाः ।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २३ ॥

संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणां ।
तां चापलपतां पापं यस्यार्यो ऽनुमते गतः ॥ २४ ॥
हस्त्यश्वरथसंबाधे युद्धे शस्त्रसमाकुले ।
मास्म कार्षीत् सतां धर्मं यस्यार्यो ऽनुमते गतः ॥ २५ ॥
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स नाशयतु दुष्टात्मा यस्यार्यो ऽनुमते गतः ॥ २६ ॥
विश्वासात् कथितं किंचित् परिवादं मिथः क्वचित् ।
विवृणोतु स दुष्टात्मा यस्यार्यो ऽनुमते गतः ॥ २७ ॥
अप्राप्य सदृशान् दारानपत्यः प्रमीयतां ।
अनवाप्य क्रियां धर्म्यां यस्यार्यो ऽनुमते गतः ॥ २८ ॥
संग्रामे समुपोढे तु शत्रुपक्षे भयंकरे ।
पलायमानो वध्येत यस्यार्यो ऽनुमते गतः ॥ २९ ॥
कपालपाणिः पृथिवीमटतां चीरसंवृतः ।
भिक्षमाणो यथोन्मत्तो यस्यार्यो ऽनुमते गतः ॥ ३० ॥
उभे संध्ये शयानस्य यत् पापं परिकल्प्यते ।
तच्च पापं भवेत् तस्य यस्यार्यो ऽनुमते गतः ॥ ३१ ॥
यदग्निदायके पापं यत् पापं गुरुतल्पगे ।
मित्रद्रोहे च यत् पापं तत् पापं प्रतिपद्यतां ॥ ३२ ॥
देवतानां पितॄणां च मातापित्रोस्तथैव च ।
मास्म कार्षीत् स शुश्रूषां यस्यार्यो ऽनुमते गतः ॥ ३३ ॥

सतां लोकात् सतां कीर्त्याः सज्जुष्टात् कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्यो ऽनुमते गतः ॥ ३४ ॥
आशामाशंसमानानां दीनानामूर्द्ध्वचक्षुषां ।
अर्थिनां वितथां कुर्याद्यस्यार्यो ऽनुमते गतः ॥ ३५ ॥
ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीं ।
अतिवर्त्तेत दुष्टात्मा यस्यार्यो ऽनुमते गतः ॥ ३६ ॥
धर्मदारान् परित्यज्य परदारान् निषेवतां ।
त्यक्तधर्मरतिर्मूढो यस्यार्यो ऽनुमते गतः ॥ ३७ ॥
पानीयदूषके पापं तथैव विषदायके ।
यत् तदेकः स लभतां यस्यार्यो ऽनुमते गतः ॥ ३८ ॥
एवमाश्वासयन्नेव कौशल्यां पार्थिवात्मजः ।
विहीनां पतिपुत्राभ्यां दुःखार्त्ता निपपात ह ॥ ३९ ॥
तथा तु शपथैः कष्टैः शपमानमचेतनं ।
भरतं शोकसंतप्ता कौशल्या वाक्यमब्रवीत् ॥ ४० ॥
मम दुःखमिदं पुत्र भूयः समुपजायते ।
शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥ ४१ ॥
दिष्ट्या न चलितो धर्मादात्मा ते सहलक्ष्मणः ।
वत्स सत्यप्रतिज्ञो हि सतां लोकानवाप्स्यसि ॥ ४२ ॥
इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलं ।
परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥ ४३ ॥

एवं विलपमानस्य दुःखार्त्तस्य पुनः पुनः ।
मोहाच्च शोकसंरम्भाद्बभूव लुलितं मनः ॥ ४४ ॥
लालप्यमानस्य विचेतनस्य ।
प्रणष्टबुद्धेः पतितस्य भूमौ ।
मुहुर्मुहुर्निःश्वसतश्च घर्मं ।
सा तस्य शोकेन जगाम रात्रिः ॥ ४५ ॥

इत्ययोध्याकाण्डे भरतशपथो नाम पञ्चसप्ततितमः सर्गः
॥ ७५ ॥

---

## CAPUT LXXVI.

### DASARATHAE FUNUS.

तमेवं शोकसंतप्तं भरतं केकयीसुतं ।
उवाच वदतां श्रेष्ठो वशिष्ठः श्रेष्ठवागृषिः ॥ १ ॥
अलं शोकेन भद्रं ते राजपुत्र महायशः ।
प्राप्तकालं नरपतेः कुरु संयानमुत्तमं ॥ २ ॥
वशिष्ठस्य वचः श्रुत्वा भरतो धारणां गतः ।
प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥ ३ ॥

उद्धृत्य तैलसंक्लेदात् स तु भूमौ निवेश्य तं ।
आपीतवर्णवदनं प्रसुप्तमिव भूमिपं ॥ ४ ॥
संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते ।
ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५ ॥
किं ते व्यवसितं राजन् प्रोषिते मय्यनागते ।
विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलं ॥ ६ ॥
क्व यास्यसि महाराज हित्वेमं दुःखितं जनं ।
हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७ ॥
योगक्षेमं तु तेऽव्यग्रं कोऽस्मिन् कल्पयिता पुरे ।
त्वयि प्रयाते स्वस्तात रामे च वनमाश्रिते ॥ ८ ॥
विधवा पृथिवी राजन् त्वया हीना न राजते ।
हीनचन्द्रेव रजनी नगरी प्रतिभाति मां ॥ ९ ॥
एवं विलपमानं तं भरतं दीनमानसं ।
अब्रवीद्वचनं भूयो वशिष्ठो भगवानृषिः ॥ १० ॥
प्रेतकार्याणि यान्यस्य कर्तव्यानि विशांपतेः ।
तान्यव्य तु महाबाहो क्रियन्तामविचारितं ॥ ११ ॥
तथेति भरतो वाक्यं वशिष्ठस्याभिपूज्य तत् ।
ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः ॥ १२ ॥
ये त्वग्नयो नरेन्द्रस्य अग्न्यागाराद्बहिष्कृताः ।
ऋत्विग्भिर्याजकैश्चैव तेऽह्रूयन्त यथाविधि ॥ १३ ॥

शिबिकायामथारोप्य राजानं गतचेतसं ।
बाष्पकण्ठा विमनसस्तमूहुः परिचारकाः ॥ १४ ॥
हिरण्यं च सुवर्णं च वासांसि विविधानि च ।
प्रकिरन्तो जना मार्गे नृपतेरग्रतो ययुः ॥ १५ ॥
चन्दनागुरुनिर्यासान् सरलं पद्मकं तथा ।
देवदारूणि चाहृत्य क्षेपयन्ति तथापरे ॥ १६ ॥
गन्धान् उच्चावचांश्चान्यांस्तत्र गत्वाथ भूमिपं ।
ततः संवेशयामासुश्चितामध्ये तमृत्विजः ॥ १७ ॥
तदा हुताशनं हुत्वा जेपुस्तस्येदमृत्विजः ।
जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८ ॥
शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः ।
नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तथा ॥ १९ ॥
प्रसव्यं चापि तं चक्रुरृत्विजोऽग्निचितं नृपं ।
स्त्रियश्च शोकसंतप्ताः कौशल्याप्रमुखास्तदा ॥ २० ॥
क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे ।
आर्त्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१ ॥
ततो रुदन्त्यो विवशा विलप्य च पुनः पुनः ।
यानेभ्यः सरयूतीरमवतेरुर्वराङ्गनाः ॥ २२ ॥

कृत्वोदकं ते भरतेन सार्द्धं ।

नृपाङ्गना मन्त्रिपुरोहिताश्च ।

पुरं प्रविश्याश्रुपरीतनेत्रा ।
भूमौ दशाहं व्यनयन्त दुःखं ॥ २३ ॥

इत्ययोध्याकाण्डे दशरथसंस्कारो नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## CAPUT LXXVII.

### DASARATHAE OSSA LECTA.

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः ।
द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥ १ ॥
ब्राह्मणेभ्यो ददौ रत्नं धनमन्नं च पुष्कलं ।
वास्तिकं बहु शुक्लं च गाश्चापि शतशस्तथा ॥ २ ॥
दासीदासं च यानं च वेश्मानि सुमहान्ति च ।
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदेहिकं ॥ ३ ॥
ततः प्रभातसमये दिवसेऽथ त्रयोदशे ।
विललाप महाबाहुर्भरतः शोकमूर्छितः ॥ ४ ॥
शब्दापिहितकण्ठश्च शोधनार्थमुपागतः ।
चितामूले पितुर्वाक्यमिदमाह सुदुःखितः ॥ ५ ॥

तात यस्मिन् निसृष्टोऽहं त्वया भ्रातरि राघवे ।
तस्मिन् वनं प्रव्रजिते शून्ये त्यक्तोऽस्म्यहं त्वया ॥ ६ ॥
यस्या गतिरनाथायाः पुत्रः प्रव्राजितो वनं ।
तामम्बां तात कौशल्यां त्यक्त्वा त्वं क्व गतो नृप ॥ ७ ॥
दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलं ।
पितुः शरीरनिर्वाणं निष्टनन् विषसाद ह ॥ ८ ॥
स तु दृष्ट्वा रुदन् दीनः पपात धरणीतले ।
उत्थाप्यमानः शक्रस्य यन्त्रध्वज इव च्युतः ॥ ९ ॥
अभिपेतुस्ततः सर्वे तस्यामात्याः शुचिव्रतं ।
अन्तकाले निपतितं ययातिमृषयो यथा ॥ १० ॥
शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतं ।
विसंज्ञो न्यपतद्भूमौ भूमिपालमनुस्मरन् ॥ ११ ॥
उन्मत्त इव निश्चेता विललाप सुदुःखितः ।
स्मृत्वा पितुर्गुणाङ्गानि तानि तानि तदा तदा ॥ १२ ॥
मन्थराप्रभवस्तीव्रः कैकेयीग्राहसंकुलः ।
वरदानमयोऽक्षोभ्योऽमज्जयच्छोकसागरः ॥ १३ ॥
सुकुमारं च बालं च सततं लालितं त्वया ।
क्व तात भरतं हित्वा विलपन्तं गमिष्यसि ॥ १४ ॥
ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च ।
प्रवारयसि नः सर्वांस्तन्नः कोऽद्य करिष्यति ॥ १५ ॥

अवदारणकाले तु पृथिवी नावदीर्यते ।
विहीना या त्वया राज्ञा धर्मज्ञेन महात्मना ॥ १६ ॥
पितरि स्वर्गमापन्ने रामे चारण्यमाश्रिते ।
किं मे जीवितसामर्थ्यं प्रवेक्ष्यामि हुताशनं ॥ १७ ॥
हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालितां ।
अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनं ॥ १८ ॥
तयोर्विलपितं श्रुत्वा व्यसनं चाप्यवेक्ष्य तत् ।
भृशमार्त्ततरा भूयः सर्व एवानुगामिनः ॥ १९ ॥
ततो विषण्णौ श्रान्तौ च शत्रुघ्नभरतावुभौ ।
धरायां स्म व्यचेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २० ॥
ततः प्रकृतिमान् वैद्यः पितुरेषां पुरोहितः ।
वशिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह ॥ २१ ॥
त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो ।
शावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥ २२ ॥
त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः ।
तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥ २३ ॥
सुमन्त्रश्चापि शत्रुघ्नमुत्थाप्याभिप्रसाद्य च ।
श्रावयामास तत्त्वज्ञः सर्वभूतभवाभवं ॥ २४ ॥
उत्थितौ तौ नरव्याघ्रौ प्रकाशेते यशस्विनौ ।
वर्षातपपरिग्लानौ पृथगिन्द्रध्वजाविव ॥ २५ ॥

अश्रूणि परिमृद्गन्ती रुक्मानी दीनभाषिणी ।
अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥

इत्ययोध्याकाण्डे दशरथसंकालनं नाम सप्तसप्ततितमः
सर्गः ॥ ७७ ॥

---

CAPUT LXXVIII.

ANCILLA GIBBOSA MALE MULCATA.

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः ।
भरतं शोकसंतप्तमिदं वचनमब्रवीत् ॥ १ ॥
गतिर्यः सर्वभूतानां दुःखेन पुनरात्मनः ।
स रामः सत्त्वसंपन्नः स्त्रिया प्रव्राजितो वनं ॥ २ ॥
बलवान् वीर्यसंपन्नो लक्ष्मणो नाम यो ऽप्यसौ ।
किं न मोचयते रामं कृत्वापि पितृनिग्रहं ॥ ३ ॥
पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ ।
उत्पथं यः समारूढो नार्या राजा वशं गतः ॥ ४ ॥
इति स्म भाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे ।
प्राग्द्वारे ऽभूत् तदा कुब्जा शुभ्राभरणभूषिता ॥ ५ ॥

लिप्ता चन्दनसारेण राजवस्त्राणि बिभ्रती ।
विविधं विविधैस्तैस्तैर्भूषणैश्च विभूषिता ॥ ६ ॥
मेखलादामभिश्चित्रैरन्यैश्च वरभूषणैः ।
बभासे बहुभिर्बद्धा रज्जुभिरिव वानरी ॥ ७ ॥
तां समीक्ष्य तदा द्वास्थो भृशं पापस्य कारिणीं ।
गृहीत्वाकरुणां कुब्जां शत्रुघ्नाय न्यवेदयत् ॥ ८ ॥
यस्याः कृते वने रामो न्यस्तदेहश्च नः पिता ।
सेयं पापा नृशंसा च तस्याः कुरु यथागति ॥ ९ ॥
शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः ।
अन्तःपुरचरान् सर्वान् इत्युवाच द्रुतं वचः ॥ १० ॥
तीव्रमुत्पादितं दुःखं भ्रातृणां मे तथा पितुः ।
यया सेयं नृशंसस्य कर्मणः फलमश्नुतां ॥ ११ ॥
एवमुक्ता च तेनाशु सखीजनसमावृता ।
गृहीता बलवत् कुब्जा स्तैर्गृहमनादयत् ॥ १२ ॥
ततस्तु भृशसंत्रस्तास्तस्याः सर्वः सखीजनः ।
क्रुद्धमाज्ञाय शत्रुघ्नं व्यपलायत सर्वशः ॥ १३ ॥
अमन्त्रयत कृत्स्नश्च तस्याः सर्वः सखीजनः ।
यथायं समुपक्रान्तो निःशेषं नः करिष्यति ॥ १४ ॥
सानुक्रोशां वदान्यां च धर्मज्ञां च यशस्विनीं ।
कौशल्यां शरणं यामः सा हि नोऽस्तु ध्रुवा गतिः ॥ १५ ॥

स च रोषेण ताम्राक्षः शत्रुघ्नः शत्रुतापनः ।
विचकर्ष ततः कुब्जां क्रोशतीं पृथिवीतले ॥ १६ ॥
तस्यास्तु कृष्यमाणाया मन्थरायास्ततस्ततः ।
चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७ ॥
तेन भाण्डेन संस्तीर्णं श्रीमद्राजनिवेशनं ।
अशोभत तदा भूयः शारदं गगणं यथा ॥ १८ ॥
स बली बलवत् क्रोधाद्गृहीत्वा पुरुषर्षभः ।
कैकेयीमभिनिर्भर्त्स्य बभाषे परुषं वचः ॥ १९ ॥
तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता ।
शत्रुघ्नभयसंत्रस्ता पुत्रं शरणमागता ॥ २० ॥
तं प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत् ।
अवध्याः सर्वभूतानां प्रमदाः क्षम्यतां त्वया ॥ २१ ॥
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीं ।
यदि मां धार्मिको रामो नासूयेन्मातृघातकं ॥ २२ ॥
इमामपि हतां कुब्जां यदि जानाति राघवः ।
त्वां च मां चैव धर्मात्मा नाभिभाषिष्यते ध्रुवं ॥ २३ ॥
भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः ।
न्यवर्तत तदा रोषात् तां मुमोच च मूर्छितां ॥ २४ ॥
सा पादमूले कैकेय्या मन्थरा निपपात ह ।
निःश्वसन्ती सुदुःखार्त्ता कृपणं विललाप च ॥ २५ ॥

शत्रुघ्नविक्षेपविमूढसंज्ञां ।
समीक्ष्य कुब्जां भरतस्य माता ।
शनैः समाश्वासयदार्त्तरूपां ।
क्रौञ्चीं विलग्नामिव वीक्षमाणां ॥ २६ ॥

इत्ययोध्याकाण्डे कुब्जाकर्षणं नाम अष्टसप्ततितमः सर्गः
॥ ७८ ॥

---

## CAPUT LXXIX.

### BHARATAE IUSSA.

ततः प्रभातसमये दिवसेऽथ चतुर्दशे ।
समेत्य राजकर्तारो भरतं वाक्यमब्रुवन् ॥ १ ॥
गतो दशरथः स्वर्गं यो नो गुरुतरो गुरुः ।
रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलं ॥ २ ॥
त्वमद्य भव नो राजा राजपुत्र महायशः ।
संगत्या नापराध्नोति राज्यमेतदनायकं ॥ ३ ॥
आभिषेचनिकं सर्वमिदमादाय राघव ।
प्रतीक्षते त्वां स्वजनः श्रेणयश्च नृपात्मज ॥ ४ ॥

राज्यं गृह्णाण भरत पितृपैतामहं ध्रुवं ।
अभिषेचय चात्मानं पाहि चास्मान् नरर्षभ ॥ ५ ॥
आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणं ।
भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ॥ ६ ॥
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ।
नैवं भवन्तो मां वक्तुमर्हन्त्यकुशला इव ॥ ७ ॥
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥ ८ ॥
युज्यतां महती सेना चतुरङ्गमहाबला ।
आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९ ॥
आभिषेचनिकं चैव सर्वमेतदुपस्कृतं ।
पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १० ॥
तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतं ।
आनयिष्यामि वै रामं हव्यवाहमिवाध्वरात् ॥ ११ ॥
न सकामां करिष्यामि स्वामिमां मातृगृध्निनीं ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२ ॥
क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च ।
रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥ १३ ॥
एवं संभाषमाणं तं रामहेतोर्नृपात्मजं ।
प्रत्युवाच जनः सर्वः श्रीमद्वाक्यमनुत्तमं ॥ १४ ॥

एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठतां ।
यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥ १५ ॥
अनुत्तमं तद्वचनं नृपात्मज- ।
प्रभाषितं संश्रवणे निशम्य च ।
प्रहर्षजास्तं प्रति बाष्पबिन्दवो ।
निपेतुरार्याननेत्रसंभवाः ॥ १६ ॥

इत्ययोध्याकाण्डे भरतसंदेशो नाम नवसप्ततितमः सर्गः
॥ ७९ ॥

---

CAPUT LXXX.

VIA STRATA.

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः ।
स्वकर्मनिरताः पौराः खनका यन्त्रकास्तथा ॥ १ ॥
कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः ।
तथा वर्द्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २ ॥
कूपकाराः सुधाकारा वंशकर्मकृतस्तथा ।
समर्था ये च द्रष्टारः पुरतस्ते प्रतस्थिरे ॥ ३ ॥
स तु हर्षात् तमुद्देशं जनौघो विपुलः प्रयान् ।
अशोभत महावेगः समुद्र इव पर्वणि ॥ ४ ॥

ते स्वचारं समास्थाय वर्त्मकर्मणि कोविदाः
करणैर्विविधोपेतैः पुरस्तात् संप्रतस्थिरे ॥ ५ ॥
लता वल्लीश्च गुल्मांश्च स्थाणून् अश्मन एव च ।
जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान् द्रुमान् ॥ ६ ॥
अवृक्षेषु च देशेषु केचिद्वृक्षान् अरोपयन् ।
केचित् कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित् ॥ ७ ॥
अपरे वीरणस्तम्बान् बलिनो बलवत्तराः ।
विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८ ॥
अपरेऽपूरयन् कूपान् पांशुभिः श्वभ्रमायतं ।
निम्नभागांस्तथा केचित् समांश्चक्रुस्ततस्ततः ॥ ९ ॥
बबन्धुर्बन्धनीयांश्च क्षोद्यान् संचुक्षुदुस्तथा ।
बिभिदुर्भेदनीयांश्च तांस्तान् देशांस्ततस्ततः ॥ १० ॥
अचिरेणैव कालेन परिवाहान् बहूदकान् ।
चक्रुर्बहुविधाकारान् सागरप्रतिमान् बहून् ॥ ११ ॥
निर्जलेषु च देशेषु खनयामासुरुत्तमान् ।
उदपानान् बहुविधान् वेदिकापरिमण्डितान् ॥ १२ ॥
ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः ।
मत्तोद्घुष्टद्विजगणः पताकाभिरलंकृतः ॥ १३ ॥
चन्दनोदकसंसिक्तो नानाकुसुमभूषितः ।
बह्वशोभत सेनायाः पन्थाः स्वर्गपथोपमः ॥ १४ ॥

आज्ञाप्याथ यथाज्ञप्ति युक्तास्ते ऽधिकृता नराः ।
रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५ ॥
यो निवेशस्त्वभिमतो भरतस्य महात्मनः ।
भूयस्तं शोभयामासुर्भूषाभिर्भूषणोपमम् ॥ १६ ॥
नक्षत्रेषु प्रशस्तेषु मुहूर्तेषु च तद्विदः ।
निवेशान् स्थापयामासुर्भरतस्य महात्मनः ॥ १७ ॥
बहुपांशुचयाश्चापि परिखापरिवारिताः ।
तत्रेन्द्रकीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८ ॥
प्रासादमालासंयुक्ताः सौधप्राकारसंवृताः ।
पताकाशोभिताः सम्यक् सुनिर्मितमहापथाः ॥ १९ ॥
विसर्पद्भिरिवाकाशे विटङ्काग्रविमानकैः ।
समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २० ॥
सचन्द्रताराणमण्डितं यथा ।
नभः क्षपायाममलं विराजते ।
नरेन्द्रमार्गः स तथा व्यराजत ।
क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥ २१ ॥

इत्ययोध्याकाण्डे मार्गसंस्कारो नाम अशीतितमः सर्गः
॥ ८० ॥

## CAPUT LXXXI.

### CONSESSUS IN AULA.

ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः ।
तुष्टुवुर्वाग्विशेषज्ञाः स्तवैर्मङ्गलसंहितैः ॥ १ ॥
सुवर्णकोणाभिहतः प्राणदद्यामदुन्दुभिः ।
दध्मुः शङ्खांश्च शतशो वाद्यांश्चोच्चावचस्वरान् ॥ २ ॥
स तूर्यघोषः सुमहान् दिवमापूरयन्निव ।
भरतं शोकसंततं भूयः शोकैररन्धयत् ॥ ३ ॥
ततः प्रबुद्धो भरतस्तं घोषं संनिवर्त्य च ।
नाहं राजेति चाप्युक्त्वा शत्रुघ्नमिदमब्रवीत् ॥ ४ ॥
पश्य शत्रुघ्न कैकेय्या लोकस्यापकृतं महत् ।
विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५ ॥
तस्यैषा धर्मराजस्य धर्ममूला महात्मनः ।
परिभ्रमति राजश्रीर्नौरिवाकर्णका जले ॥ ६ ॥
यो हि नः सुमहान् नाथः सोऽपि प्रव्राजितो वनं ।
अनया धर्ममुत्सृज्य मात्रा मे राघवः स्वयं ॥ ७ ॥
इत्येवं भरतं वीक्ष्य विलपन्तमचेतनं ।
कृपणा रुरुदुः सर्वाः सस्वरं योषितस्तदा ॥ ८ ॥
तथा तस्मिन् विलपति वशिष्ठो राजधर्मवित् ।
सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९ ॥

शातकुम्भमयीं दिव्यां मणिहेमसमाकुलां ।
सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १० ॥
स काञ्चनमयं पीठं परार्द्ध्यास्तरणावृतं ।
अध्यास्त सर्ववेदज्ञो दूतान् अनुशशास च ॥ ११ ॥
ब्राह्मणान् क्षत्रियान् योधान् अमात्यान् गुणवल्लभान् ।
क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥ १२ ॥
सराजपुत्रं शत्रुघ्नं भरतं च यशस्विनं ।
युधाजितं सुमन्त्रं च ये च तत्र हिता जनाः ॥ १३ ॥
ततो हलहलाशब्दो महान् समुदपद्यत ।
रथैरश्वैर्गजैश्चापि जनानामुपगच्छतां ॥ १४ ॥
ततो भरतमायान्तं शतक्रतुमिवामराः ।
प्रत्यनन्दन् प्रकृतयो यथा दशरथं तदा ॥ १५ ॥
ह्रद इव तिमिनागसंवृतम्- ।
स्तिमितजलो मणिशङ्खशर्करः ।
दशरथसुतशोभिता सभा ।
सदशरथेव बभौ यथा पुरा ॥ १६ ॥

इत्ययोध्याकाण्डे सभाप्रवेशो नाम एकाशीतितमः सर्गः
॥ ८१ ॥

## CAPUT LXXXII.

### Exercitus profectio.

तामार्यगणसंपूर्णां भरतप्रग्रहां सभां ।
ददर्श बुद्धिसंपन्नः पूर्णचन्द्रां निशामिव ॥ १ ॥
आसनानि यथान्यायमार्याणां विशतां तदा ।
वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २ ॥
राज्ञस्तु प्रकृतीः सर्वाः स संप्रेक्ष्य च धर्मवित् ।
इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ३ ॥
तात राजा दशरथः स्वर्गतो धर्ममाचरन् ।
धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ४ ॥
रामस्तथा सत्यधृतिः सतां धर्ममनुस्मरन् ।
नाजहात् पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ५ ॥
पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकं ।
तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ६ ॥
उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केरलाः ।
कोट्याः परान्ताः सामुद्रा रत्नान्युपहरन्तु ते ॥ ७ ॥
तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ।
जगाम मनसा रामं धर्मज्ञं धर्मकाङ्क्षया ॥ ८ ॥

स बाष्पकलया वाचा कलहंसस्वरो युवा ।
विललाप सभामध्ये जगर्हे च पुरोहितं ॥ ९ ॥
चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः ।
धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ १० ॥
कथं दशरथाज्जातो भवेद्राज्यापहारकः ।
राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥ ११ ॥
ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १२ ॥
अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि ।
इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १३ ॥
यद्धि मात्रा कृतं पापं नाहं तदपि रोचये ।
इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १४ ॥
राममेवानुगच्छामि स राजा द्विपदां वरः ।
त्रयाणामपि लोकानां राघवो राज्यमर्हति ॥ १५ ॥
तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः ।
हर्षान्मुमुचुरश्रूणि रामे निहितचेतसः ॥ १६ ॥
यदि त्वार्यं न शक्यामि विनिवर्तयितुं वनात् ।
वने तत्रैव वत्स्यामि यथार्यो लक्ष्मणस्तथा ॥ १७ ॥
सर्वोपायं च वर्तिष्ये विनिवर्तयितुं वनात् ।
समक्षमार्यमिश्राणां साधूनां गुणवर्तिनां ॥ १८ ॥

विष्टिकर्मान्तिकाः सर्वे मार्गशोधकरक्षकाः ।
प्रस्थापिता मया पूर्वं यात्रा च मम रोचते ॥ १९ ॥
एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः ।
समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदं ॥ २० ॥
तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात् ।
यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥ २१ ॥
एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना ।
प्रहृष्टात्मादिशत् सर्वं यथा संदिष्टमिष्टवत् ॥ २२ ॥
ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षा बलस्य च ।
श्रुत्वा यात्रां समाज्ञातां राघवस्य निवर्तने ॥ २३ ॥
ततो योधाङ्गनाः सर्वा भर्तॄन् स्वान् स्वान् गृहे गृहे ।
यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः ॥ २४ ॥
ते हयैर्गोरथैः शीघ्रं स्यन्दनैश्च मनोजवैः ।
सह योधैर्बलाध्यक्षा बलं सज्जमवेदयन् ॥ २५ ॥
सज्जं तु तद्बलं दृष्ट्वा भरतो गुरुसंनिधौ ।
रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ २६ ॥
ततः सुमन्त्रस्तामाज्ञां प्रतिगृह्य प्रहर्षितः ।
रथं गृहीत्वोपययौ युक्तं परमवाजिभिः ॥ २७ ॥
स राघवः सत्यधृतिः प्रतापवान् ।
वचः सुयुक्तं दृढसत्यविक्रमः ।

गुरुं महारण्यगतं यशस्विनं ।
प्रसादयिष्यन् भरतोऽब्रवीत् तदा ॥ २८ ॥
तूर्णं त्वमुत्थाय सुमन्त्र गच्छ ।
योगं समाज्ञापय मे बलानां ।
आनेतुमिच्छामि हि तं वनस्थं ।
प्रसाद्य रामं जगतो हिताय ॥ २९ ॥
स सूतपुत्रो भरतेन सम्यग्-
आज्ञापितः संपरिपूर्णकामः ।
शशास सर्वान् प्रकृतिप्रधानान् ।
बलस्य मुख्यांश्च सुहृज्जनं च ॥ ३० ॥
ततः समुत्थाय कुले कुले तु ।
राजन्यवैश्या वृषलाश्च विप्राः ।
अयूयुजन्नुष्ट्रखरान् रथांश्च ।
नागान् हयांश्चैव कुलप्रसूतान् ॥ ३१ ॥

इत्ययोध्याकाण्डे सेनाप्रस्थानं नाम द्व्यशीतितमः सर्गः
॥ ८२ ॥

## CAPUT LXXXIII.

### BHARATAS ITINERE FRATREM SUBSECUTUS.

ततः समुत्थितः कल्यमास्थाय स्यन्दनोत्तमं ।
प्रययौ भरतः शीघ्रं रामदर्शनकाङ्क्षया ॥ १ ॥
अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोहिताः ।
अधिरुह्य हयैर्युक्तान् रथान् सूर्यरथोपमान् ॥ २ ॥
नव नागसहस्राणि कल्पितानि यथाविधि ।
अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनं ॥ ३ ॥
षष्टी रथसहस्राणि धन्विनो विविधायुधाः ।
अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनं ॥ ४ ॥
शतं सहस्राण्यश्वानां समारूढानि धन्विभिः ।
अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनं ॥ ५ ॥
कैकेयी च सुमित्रा च कौशल्या च यशस्विनी ।
रामानयनसंतुष्टा ययुर्यानेन भास्वता ॥ ६ ॥
प्रयाताश्चार्यसंघाता रामं द्रष्टुं सलक्ष्मणं ।
तस्यैव च कथाश्चित्राः कुर्वाणा हृष्टमानसाः ॥ ७ ॥
मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतं ।
कदा द्रक्ष्यामहे रामं जगतः शोकनाशनं ॥ ८ ॥
दृष्ट एव हि नः शोकमपनेष्यति राघवः ।
तमः कृत्स्नस्य लोकस्य समुद्यन्निव भास्करः ॥ ९ ॥

इत्येवं कथयन्तस्ते संप्रहृष्टाः शुभाः कथाः ।
परिष्वजानाश्चान्योन्यं ययुर्नागरिकास्तदा ॥ १० ॥
ये च तत्रापरे सर्वे संमता ये च नैगमाः ।
रामं प्रति ययुः सर्वा हृष्टाः प्रकृतयस्तथा ॥ ११ ॥
मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः ।
सूत्रकर्मकृतश्चैव ये च शस्त्रोपजीविनः ॥ १२ ॥
सुवर्णकाराः प्रख्यातास्तथा कम्बलधावकाः ।
स्नापकोष्णोदका वैद्या धूपकाः शौण्डिकास्तथा ॥ १३ ॥
मायूरकाः क्राकचिका वेधका रोचकास्तथा ।
दन्तकाराः सुधाकारा ये च गन्धोपजीविनः ॥ १४ ॥
रजकास्तुन्नवायाश्च ग्रामघोषमहत्तराः ।
शैलूषाश्च सह स्त्रीभिर्यान्ति कैवर्त्तकास्तथा ॥ १५ ॥
समाहिता वेदविदो ब्राह्मणा वृत्तसंमताः ।
गोरथैर्भरतं यान्तमनुजग्मुः सहस्रशः ॥ १६ ॥
सुवेशाः शुद्धवसनास्ताम्रमृष्टानुलेपिनः ।
सर्वे ते विविधैर्यानैः शनैर्भरतमन्वयुः ॥ १७ ॥
प्रहृष्टमुदिता सेना सान्वयात् कैकयीसुतं ।
भ्रातुरानयने यान्तं भरतं भ्रातृवत्सलं ॥ १८ ॥
ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः ।
समासेदुस्ततो गङ्गां शृङ्गवेरपुरं प्रति ॥ १९ ॥

यत्र रामसखा वीरो गुहो ज्ञातिगणैर्वृतः ।
निवसत्यप्रमादेन देशं तं परिपालयन् ॥ २० ॥
उपेत्य तीरं गङ्गायाश्चक्रवाकैरलंकृतं ।
व्यवतिष्ठत सा सेना भरतस्यानुयायिनी ॥ २१ ॥
निरीक्ष्यानुगतां सेनां तां गङ्गां च शिवोदकां ।
भरतः सचिवान् सर्वान् अब्रवीद्वाक्यकोविदः ॥ २२ ॥
निवेशयत मे सैन्यमभिप्रायेण सर्वतः ।
विश्रान्ताः प्रतरिष्यामः श्व इमां सागरंगमां ॥ २३ ॥
दातुं च तावदिच्छामि स्वर्गतस्य महीपतेः ।
और्ध्वदेहनिमित्तार्थमवतीर्योदकं नदीं ॥ २४ ॥
तस्यैवं ब्रुवतोऽमात्यास्तथेत्युक्त्वा समाहिताः ।
न्यवेशयंस्तां छन्देन स्वेन स्वेन पृथक् पृथक् ॥ २५ ॥
निवेश्य गङ्गामनु तां महानदीं ।
चमूं विधानैः परिबर्हशोभिनीं ।
उवास रामस्य तदा महात्मनो ।
विचिन्तयानो भरतो निवर्तनं ॥ २६ ॥

इत्ययोध्याकाण्डे भरतानुयानं नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥

## CAPUT LXXXIV.

## GUHAE IRA.

ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीं ।
निषादराजो दृष्ट्वैव ज्ञातीन् संत्वरितोऽब्रवीत् ॥ १ ॥
महतीयमितः सेना सागराभा प्रदृश्यते ।
नास्यान्तमवगच्छामि मनसापि विचिन्तयन् ॥ २ ॥
यथा तु खलु दुर्बुद्धिर्भरतः स्वयमागतः ।
स एष हि महाकायः कोविदारध्वजो रथे ॥ ३ ॥
बन्धयिष्यति वा पाशैरथ वास्मान् वधिष्यति ।
अनु दाशरथिं रामं पित्रा राज्याद्विवासितं ॥ ४ ॥
संपूर्णां श्रियमिच्छन् स तस्य राज्ञः सुदुर्लभां ।
भरतः कैकयीपुत्रो हन्तुं समधिगच्छति ॥ ५ ॥
भर्ता चैव सखा चैव रामो दाशरथिर्मम ।
तस्यार्थकामाः संनद्धा गङ्गानूपेऽत्र तिष्ठत ॥ ६ ॥
तिष्ठन्तु सर्वदासाश्च गङ्गामन्वाश्रिता नदीं ।
बलयुक्ता नदीरक्षा मांसमूलफलाशनाः ॥ ७ ॥
नौशतानां च पञ्चानामेकैकस्यां शतं शतं ।
कैवर्तानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८ ॥
यद्यदुष्टस्तु भरतो रामस्येह भविष्यति ।
इयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥ ९ ॥

इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च ।
अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १० ॥
तमायान्तं तु संप्रेक्ष्य सूतपुत्रः प्रतापवान् ।
भरतायाचचक्षेऽथ विनयज्ञो विनीतवत् ॥ ११ ॥
एष ज्ञातिसहस्रेण स्थपतिः परिवारितः ।
कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ॥ १२ ॥
तस्मात् पश्यतु काकुत्स्थ निषादाधिपतिर्गुहः ।
असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥ १३ ॥
एतत् तु वचनं श्रुत्वा सुमन्त्राद्भरतः शुभं ।
उवाच सारथिं शीघ्रं गुहः पश्यतु मामिति ॥ १४ ॥
लब्धानुज्ञां संप्रहृष्टो ज्ञातिभिः परिवारितः ।
आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥ १५ ॥
निष्कुटश्चैव देशोऽयं वञ्चिताश्चापि ते वयं ।
निवेदयाम ते सर्वं स्वके दासकुले वस ॥ १६ ॥
अस्ति मूलफलं चैतन्निषादैः स्वयमर्जितं ।
आर्द्रं शुष्कं तथा मांसं वन्यं चोच्चावचं तथा ॥ १७ ॥
आशंसे स्वासिता सेना वत्स्यतीमां विभावरीं ।
अर्चितो विविधैः कामैः श्वः ससैन्यो गमिष्यसि ॥ १८ ॥

इत्ययोध्याकाण्डे गुहकोपो नाम चतुरशीतितमः सर्गः
॥ ८४ ॥

## CAPUT LXXXV.

### Congressus Guhae cum Bharata.

एवमुक्तस्तु भरतो निषादाधिपतिं गुहं ।
प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितं ॥ १ ॥
ऊर्जितः खलु ते कामः कृतो मम गुरोः सखे ।
यो मे त्वमीदृशीं सेनामेको ऽभ्यर्चितुमिच्छसि ॥ २ ॥
इत्युक्त्वा स महातेजा गुहं वचनमुत्तमं ।
अब्रवीद्भरतः श्रीमान् पन्थानं दर्शयन् पुनः ॥ ३ ॥
कतरेण गमिष्यामि भरद्वाजाश्रमं पथा ।
गहनो ऽयं भृशं देशो गङ्गानूपो दुरत्ययः ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
अब्रवीत् प्राञ्जलिर्भूत्वा गुहो गहनगोचरः ॥ ५ ॥
दासास्त्वानुगमिष्यन्ति देशज्ञाः सुसमाहिताः ।
अहं चानुगमिष्यामि राजपुत्र महायशः ॥ ६ ॥
कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ।
इयं ते महती सेना शङ्कां जनयतीव मे ॥ ७ ॥
तमेवमभिभाषन्तमाकाश इव निर्मलः ।
भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥ ८ ॥

मा भूत् स कालो यत् कष्टं न मां शङ्कितुमर्हसि ।
राघवो स हि मे भ्राता ज्येष्ठः पितृसमो मतः ॥ ९ ॥
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनं ।
बुद्धिरन्या न ते कार्या गुह सत्यं ब्रवीमि ते ॥ १० ॥
स तु संहृष्टवदनः श्रुत्वा भरतभाषितं ।
पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः ॥ ११ ॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥ १२ ॥
शाश्वती खलु ते कीर्तिर्लोकान् अनुचरिष्यति ।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥ १३ ॥
एवं संभाषमाणस्य गुहस्य भरतेन ह ।
बभौ नष्टप्रभः सूर्यो रजनी चाभ्यवर्तत ॥ १४ ॥
संनिवेश्य स तां सेनां गुहेन परितोषितः ।
शत्रुघ्नेन समं श्रीमान् शयनं समुपाविशत् ॥ १५ ॥
रामचिन्तामयः शोको भरतस्य महात्मनः ।
उपस्थितो ह्यनर्हस्य धर्मप्रेक्षस्य तादृशः ॥ १६ ॥
अन्तर्दाहेन दहनः संतापयति राघवं ।
वनदाहाग्निसंततं गूढोऽग्निरिव पादपं ॥ १७ ॥
प्रस्रुतः सर्वगात्रेभ्यः स्वेदं शोकाग्निसंभवं ।
यथा सूर्याग्निसंततो हिमवान् प्रस्रुतो हिमं ॥ १८ ॥

विनिःश्वसन् वै भृशदुर्मनास्तदा ।
प्रमूढसंज्ञः परमापदं गतः ।
शमं न लेभे हृदयज्वरार्दितो ।
नरर्षभो यूथहतो यथर्षभः ॥ १९ ॥

इत्ययोध्याकाण्डे गुहसमागमो नाम पञ्चाशीतितमः सर्गः
॥ ८५ ॥

---

## CAPUT LXXXVI.

### Guhae sermo.

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः ।
भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १ ॥
तं जाग्रतमदम्भेन वरचापेषुधारिणं ।
भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रुवं ॥ २ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन ॥ ३ ॥
उचितोऽयं जनः सर्वो दुःखानां त्वं सुखोचितः ।
धर्मात्मंस्तस्य गुप्त्यर्थं जागरिष्यामहे वयं ॥ ४ ॥
न हि रामात् प्रियतरो ममास्ति भुवि कश्चन ।
मोत्सुको भूर्ब्रवीम्येतदहं सत्यं तवाग्रतः ॥ ५ ॥

अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिं च विपुलामर्थकामं च केवलं ॥ ६ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिर्वृतः ॥ ७ ॥
न हि मेऽविदितं किंचिद्वनेऽस्मिंश्चरतः सदा ।
चतुरङ्गं ह्यपि बलं प्रसहेम वयं युधि ॥ ८ ॥
एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना ।
अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ ९ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ १० ॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि ।
तं पश्य गुह संविष्टं तृणेषु सह सीतया ॥ ११ ॥
महता तपसा लब्धो विविधैश्च परिश्रमैः ।
एको दशरथस्येष्टः पुत्रः सदृशलक्षणः ॥ १२ ॥
अस्मिन् प्रव्रजिते राजा न चिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।
निर्घोषो विरतो नूनमद्य राजनिवेशने ॥ १४ ॥
कौशल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि ते सर्वे जीवेयुः शर्वरीमिमां ॥ १५ ॥

जीविदपि च मे माता शत्रुघ्नस्यान्ववेक्षया ।
दुःखिता या तु कौशल्या वीरसूर्विनशिष्यति ॥ १६ ॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथं ।
राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते ।
प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपं ॥ १८ ॥
अपि सत्यप्रतिज्ञेन सार्द्धं कुशलिनो वयं ।
निवृत्ते समये ह्यस्मिन्नयोध्यां प्रविशेमहि ॥ १९ ॥
परिदेवयमानस्य तस्यैवं सुमहात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २० ॥
प्रभाते विमले सूर्ये कारयित्वा जटा उभौ ।
अस्मिन् भागीरथीतीरे सुखं संतारितौ मया ॥ २१ ॥
जटाधरौ तौ द्रुमचीरवाससौ ।
महाबलौ कुञ्जरयूथपोपमौ ।
वरेषुधी चापधरौ परंतपौ ।
व्यपेक्षमाणौ सह सीतया गतौ ॥ २२ ॥

इत्ययोध्याकाण्डे गुहवाक्यं नाम षडशीतितमः सर्गः
॥ ८६ ॥

## CAPUT LXXXVII.

### Guhae narratio.

गुहस्य वचनं श्रुत्वा भरतो भृशदुःखितः ।
ध्यानं जगाम तत्रैव यत्राश्रौषीत् तदप्रियं ॥ १ ॥
स विह्वलितसर्वाङ्गो विवृत्तविपुलेक्षणः ।
पपात सहसा भूमौ मूलभ्रष्ट इव द्रुमः ॥ २ ॥
सुकुमारं महासत्त्वं सिंहस्कन्धं महाभुजं ।
पुण्डरीकपलाशाक्षं तरुणं प्रियदर्शनं ॥ ३ ॥
भरतं मूर्छितं दृष्ट्वा विवर्णवदनो गुहः ।
बभूव व्यथितस्तत्र भूमिकम्पे यथा द्रुमः ॥ ४ ॥
तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरं स्थितः ।
परिष्वज्य रुरोदोच्चैर्विसंज्ञः शोककर्शितः ॥ ५ ॥
ततः सर्वाः समापेतुर्मातरो भरतस्य ताः ।
उपवासकृशा दीना भर्तृव्यसनकर्शिताः ॥ ६ ॥
ताश्च तं पतितं भूमौ रुदत्यः पर्यवारयन् ।
कौशल्या त्वभिसृत्यैनं दुर्मनाः परिषस्वजे ॥ ७ ॥
वत्सला स्वं यथा वत्समुपगूह्य तपस्विनी ।
परिपप्रच्छ भरतं रुदती शोकलालसा ॥ ८ ॥

पुत्र व्याधिर्न ते कच्चिच्छरीरं प्रतिबाधते ।
अस्य राजकुलस्याद्य त्वदधीनं हि जीवितं ॥ ९ ॥
त्वां दृष्ट्वा पुत्र जीवामि रामे सभ्रातृके गते ।
वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः ॥ १० ॥
कच्चिन्न लक्ष्मणे पुत्र श्रुतं ते किंचिदप्रियं ।
पुत्रे वाप्येकपुत्रायाः सहभार्ये वनं गते ॥ ११ ॥
स मुहूर्तं समाश्वास्य रुदन्नेव महायशाः ।
कौशल्यां परिशान्त्व्येदं गुहं वचनमब्रवीत् ॥ १२ ॥
भ्राता मे क्वावसद्रात्रिं क्व सीता क्व च लक्ष्मणः ।
अस्वपच्छयने कस्मिन् किं भुक्त्वा गुह शंस मे ॥ १३ ॥
सोऽब्रवीद्भरतं हृष्टो निषादाधिपतिर्गुहः ।
यद्विधं प्रतिपेदे हि रामे प्रियहितेऽतिथौ ॥ १४ ॥
अन्नमुच्चावचं भक्ष्यं फलानि विविधानि च ।
रामायाभ्यवहारार्थं बहु चोपहृतं मया ॥ १५ ॥
तत् सर्वं प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः ।
न हि तत् प्रत्यगृह्णात् स क्षत्रधर्ममनुस्मरन् ॥ १६ ॥
न ह्यस्माभिः प्रतिग्राह्यं सखे देयं तु सर्वदा ।
इति तेन वयं राजन्ननुनीता महात्मना ॥ १७ ॥
लक्ष्मणेन यदानीतं पीत्वा वारि समाहितः ।
औपवास्यं तदाकार्षीद्राघवः सह सीतया ॥ १८ ॥

ततस्तज्जलशेषेण लक्ष्मणोऽप्यकरोत् तथा ।
वाग्यतास्ते त्रयः संध्यां समुपासत संहिताः ॥ १९ ॥
सौमित्रिस्तु ततः पश्चादकरोत् स्वास्तरं शुभं ।
स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ २० ॥
तस्मिन् समाविशद्रामः स्वास्तरे सह सीतया ।
प्रक्षाल्य च तयोः पादौ व्यपाक्रामत् स लक्ष्मणः ॥ २१ ॥
एतत् तदिंगुदीमूलमेतदेव च तत् तृणं ।
यस्मिन् रामश्च सीता च रात्रिं तां शयिताबुभौ ॥ २२ ॥

नियम्य पृष्ठे तु तलांगुलित्रवान् ।
शरैः सुपूर्णाविषुधी परंतपः ।
महद्धनुः सज्जमुपोह्य लक्ष्मणो ।
निशामतिष्ठत् परितोऽस्य केवलं ॥ २३ ॥
ततस्त्वहं चोत्तमबाणचापधृक् ।
स्थितोऽभवं तत्र स यत्र लक्ष्मणः ।
अतन्द्रिभिर्ज्ञातिभिरात्तकार्मुकैर् ।
महेन्द्रकल्पं परिपालयंस्तदा ॥ २४ ॥

इत्ययोध्याकाण्डे गुहकथा नाम सप्ताशीतितमः सर्गः
॥ ८७ ॥

## CAPUT LXXXVIII.

### INGUDIS COMMEMORATIO.

तच्छ्रुत्वा निपुणं सर्वं भरतः सह मन्त्रिभिः ।
इंगुदीमूलमागम्य रामशय्यामवेक्षत ॥ १ ॥
अब्रवीज्जननीः सर्वा इह तेन महात्मना ।
शर्वरी शयितं भूमाविदमस्य विमर्दितं ॥ २ ॥
महाराजकुलीनेन महाभागेन धीमता ।
जातो दशरथेनोर्व्यां न रामः स्वप्तुमर्हति ॥ ३ ॥
अजिनोत्तरसंस्तीर्णे वरास्तरणसंचये ।
शयित्वा पुरुषव्याघ्रः कथं शेते महीतले ॥ ४ ॥
अश्रद्धेयमिदं लोके न सत्यं प्रतिभाति मां ।
मुह्यते खलु मे भावः स्वप्नोऽयमिति मे मतिः ॥ ५ ॥
न नूनं दैवतं किंचित् कालेन बलवत्तरं ।
यत्र दाशरथी रामो भूमावेवमशेत सः ॥ ६ ॥
यस्मिन् विदेहराजस्य सुता च प्रियदर्शिनी ।
दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ ७ ॥
इयं शय्या मम भ्रातुरिदमावर्तितं शुभं ।
स्थण्डिले कठिने सर्वं गात्रैर्विमृदितं तृणं ॥ ८ ॥

मन्ये साभरणा सुप्ता सीतास्मिन् शयने तदा ।
तत्र तत्र हि दृश्यन्ते सक्ताः कनकबिन्दवः ॥ ९ ॥
उत्तरीयमिहासक्तं सुव्यक्तं सीतया तदा ।
तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः ॥ १० ॥
मन्ये भर्तुः सुखा शय्या येन बाला तपस्विनी ।
सुकुमारी सती दुःखं न विजानाति मैथिली ॥ ११ ॥
हा हतोऽस्मि नृशंसोऽहं यत् सभार्यः कृते मम ।
ईदृशीं राघवः शय्यामधिशेते ह्यनाथवत् ॥ १२ ॥
सार्वभौमकुले जातः सर्वलोकसुखावहः ।
सर्वप्रियकरस्त्यक्त्वा राज्यं प्रियमनुत्तमं ॥ १३ ॥
कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः ।
सुखभागी न दुःखार्हः शयितो भुवि राघवः ॥ १४ ॥
धन्यः खलु महाभागो लक्ष्मणः शुभलक्षणः ।
भ्रातरं विषमे काले यो राममनुवर्तते ॥ १५ ॥
सिद्धार्था खलु वैदेही पतिं यानुगता वनं ।
वयं संशयिताः सर्वे हीनास्तेन महात्मना ॥ १६ ॥
अकर्णधारा पृथिवी शून्येव प्रतिभाति मे ।
गते दशरथे स्वर्गं रामे चारण्यमाश्रिते ॥ १७ ॥
न च प्रार्थयते कश्चिन्मनसापि वसुंधरां ।
वने निवसतस्तस्य बाहुवीर्याभिरक्षितां ॥ १८ ॥

शून्यसंवरणारक्षामयन्त्रितहयद्विपां ।
अनावृतपुरद्वारां राजधानीं पितुर्मम ॥ १९ ॥
अप्रहृष्टबलां न्यूनां विषमस्थामनावृतां ।
शत्रवो नाभिमन्यन्ते भक्ष्यान् विषकृतानपि ॥ २० ॥
अद्य प्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा ।
फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २१ ॥
तस्यार्थमुत्तरं कालं निवत्स्यामि सुखं वने ।
तत् प्रतिश्रुतमार्यस्य नैव मिथ्या भविष्यति ॥ २२ ॥
वसन्तं भ्रातुरर्थे मां शत्रुघ्नोऽप्यनुवत्स्यति ।
लक्ष्मणेन सहायोध्यामार्यो मे पालयिष्यति ॥ २३ ॥
अभिषेक्ष्यन्ति काकुत्स्थमयोध्यायां द्विजातयः ।
अपि मे देवताः कुर्युरिमं सत्यं मनोरथं ॥ २४ ॥
प्रसाद्यमानः शिरसा मया स्वयं ।
बहुप्रकारं यदि न प्रपत्स्यते ।
ततोऽनुवत्स्यामि चिराय राघवं ।
वने वसन् नार्हति मामुपेक्षितुं ॥ २५ ॥

इत्ययोध्याकाण्डे इंगुदीवृत्तं नाम अष्टाशीतितमः सर्गः
॥ ८८ ॥

## CAPUT LXXXIX.

### GANGIS TRAIECTUS.

उष्य रात्रिं तु तत्रैव गङ्गाकूले स राघवः ।
काल्यमुत्थाय शत्रुघ्नमिदं वचनमब्रवीत् ॥ १ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे शत्रुघ्न रजनी गता ।
पद्मबोधनमुद्यन्तं पश्य सूर्यं तमोनुदं ॥ २ ॥
शीघ्रमाह्वायय गुहं शृङ्गवेरपुरेश्वरं ।
स हि गङ्गामिमां वीर तारयिष्यति वाहिनीं ॥ ३ ॥
जागर्मि नाहं स्वपिमि तथैवार्य विचिन्तयन् ।
इत्येवमब्रवीद्भ्राता शत्रुघ्नो विप्रचोदितः ॥ ४ ॥
इति संवदतोरेवमन्योन्यं नरसिंहयोः ।
आगम्य प्राञ्जलिः काले गुहो वचनमब्रवीत् ॥ ५ ॥
कच्चित् सुखं नदीतीरेऽवात्सीः काकुत्स्थ शर्वरीं ।
कच्चिच्च सहसैन्यस्य तव नित्यमनामयं ॥ ६ ॥
गुहस्य तत् तु वचनं श्रुत्वा स्नेहादुदीरितं ।
रामस्यानुवशो वाक्यं भरतोऽपीदमब्रवीत् ॥ ७ ॥
सुखा नः शर्वरी राजन् पूजिताश्चापि ते वयं ।
गङ्गां तु नौभिर्बह्वीभिर्दासाः संतारयन्तु नः ॥ ८ ॥

ततो गुहः संत्वरितः श्रुत्वा भरतशासनं ।
प्रतिप्रविश्य नगरं तं ज्ञातिगणमब्रवीत् ॥ ९ ॥
उत्तिष्ठत प्रबुध्यध्वं ज्ञातयो भद्रमस्तु वः ।
नावः समुपकर्षध्वं तारयिष्याम वाहिनीं ॥ १० ॥
ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् ।
पञ्च नावां शतान्येव समानिन्युः समन्ततः ॥ ११ ॥
* अन्याः स्वस्तिकविज्ञेया महाघण्टाधराः पराः ।
* शोभमानाः पताकिन्यो युक्तवाहाः सुसंहताः ॥ १२ ॥
ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृतां ।
सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ॥ १३ ॥
तामारुरोह भरतः शत्रुघ्नश्च महायशाः ।
कौशल्या च सुमित्रा च याश्चान्या राजयोषितः ॥ १४ ॥
पुरोहितश्च तत्पूर्वं गुरवो ब्राह्मणाश्च ये ।
अनन्तरं राजदारास्तथैव शकटापनाः ॥ १५ ॥
आवासमादीपयतां तीर्थं चाप्यवगाहतां ।
भाण्डानि चाददानानां घोषस्त्रिदिवमस्पृशत् ॥ १६ ॥
पताकिन्यस्तु ता नावः स्वयं दासैरधिष्ठिताः ।
वहन्त्यो जनमारूढं तदा संपेतुराशुगाः ॥ १७ ॥
नारीणामभिपूर्णास्तु काश्चित् काश्चित् तु वाजिनां ।
काश्चित् तत्र वहन्ति स्म यानयुग्मं महाधनं ॥ १८ ॥

तास्तु गत्वा परं तीरमवरोप्य च तं जनं ।
निवृत्ताः काण्डचित्राणि क्रियन्ते दासबन्धुभिः ॥ १९ ॥
सवैजयन्तास्तु गजा गजारोहैः प्रचोदिताः ।
तरन्तः स्म प्रकाशन्ते सपक्षा इव पर्वताः ॥ २० ॥
नावश्चारुरुहुस्त्वन्ये प्लवैस्तेरुस्तथापरे ।
अन्ये कुम्भघटैस्तेरुरन्ये तेरुश्च बाहुभिः ॥ २१ ॥
सा पुण्या ध्वजिनी गङ्गां दासैः संतारिता स्वयं ।
मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमं ॥ २२ ॥

आश्वासयित्वा च चमूं महात्मा ।
निवेशयित्वा च यथोपजोषं ।
द्रष्टुं भरद्वाजमृषिप्रवीरं ।
ऋत्विक्सदस्यैर्भरतः प्रतस्थे ॥ २३ ॥

इत्ययोध्याकाण्डे गङ्गासंतरणं नाम एकोननवतितमः
सर्गः ॥ ८९ ॥

## CAPUT XC.

### COMMORATIO IN BHARADVAJI EREMO.

भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः ।
बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥
पद्भ्यामेव तु धर्मज्ञो न्यस्तशस्त्रपरिच्छदः ।
वसानो वाससी क्षौमे पुरोधाय पुरोहितं ॥ २ ॥
ततः संदर्शने तस्य भरद्वाजस्य राघवः ।
मन्त्रिणस्तान् अवस्थाप्य जगामानु पुरोहितं ॥ ३ ॥
वशिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः ।
संचचालासनात् तूर्णं शिष्यान् अर्घ्यमिति ब्रुवन् ॥ ४ ॥
समागम्य वशिष्ठेन भरतेनाभिवादितः ।
अबुध्यत महातेजाः सुतं दशरथस्य तं ॥ ५ ॥
ताभ्यामर्घ्यं च पाद्यं च दत्वा पश्चात् फलानि च ।
आनुपूर्व्या स धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६ ॥
अयोध्यायां बले कोषे मित्रेष्वपि च मन्त्रिषु ।
जानन् दशरथं वृत्तं न राजानमुदाहरत् ॥ ७ ॥
वशिष्ठो भरतश्चैनं पप्रच्छतुरनामयं ।
शरीरेऽग्निषु शिष्येषु वृक्षेषु मृगपक्षिषु ॥ ८ ॥

तथेति च प्रतिज्ञाय भरद्वाजो महायशाः ।
भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥ ९ ॥
किमिहागमने कार्यं तव राज्यं प्रशासतः ।
एतदाचक्ष्व मे सर्वं न हि मे शुध्यते मनः ॥ १० ॥
सुपुत्रं यममित्रघ्नं कौशल्या कुलवर्धनं ।
भ्रात्रा सह सभार्यो यश्चिरं प्रव्राजितो वनं ॥ ११ ॥
नियुक्तः स्त्रीनिमित्तेन पित्रा यो ऽसौ महायशाः ।
वनवासी भवस्वेति समाः किल चतुर्दश ॥ १२ ॥
कच्चिन्न तस्यापापस्य पापं कर्तुमिहेहसि ।
अकण्टकं भोक्तुमना राज्यं तस्याग्रजस्य वै ॥ १३ ॥
एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ।
पर्यश्रुनयनो दुःखाद्वाचा संसज्जमानया ॥ १४ ॥
हतो ऽस्मि यदि मामेवं भगवान् अपि मन्यते ।
मत्तो न दोषमाशङ्केर्नैवं मामनुशाधि हि ॥ १५ ॥
न चैतदिष्टं माता मे यदवोचन्मदन्तरं ।
नाहमेतेन तुष्टश्च न तद्वचनमाददे ॥ १६ ॥
अहं तु तं नरव्याघ्रमुपयातः प्रसादकः ।
प्रतिनेतुमयोध्यां च पादौ चास्याभिवन्दितुं ॥ १७ ॥
तन्मामेवंगतं मत्वा प्रसादं कर्तुमर्हसि ।
शंस मे भगवन् रामः क्व संप्रति महीपतिः ॥ १८ ॥

वशिष्ठादिभिर्ऋषिभिर्याचितो भगवांस्ततः ।
उवाच तं भरद्वाजः प्रसादाद्भरतं वचः ॥ १९ ॥
त्वय्येतत् पुरुषव्याघ्र युक्तं राघववंशजे ।
गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥ २० ॥
जाने चैतन्मनःस्थं ते दृढीकरणमस्त्विति ।
अपृच्छं त्वां तवात्यर्थं कीर्तिं समभिवर्धयन् ॥ २१ ॥
जाने च रामं धर्मज्ञं ससीतं सहलक्ष्मणं ।
असौ वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२ ॥
श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः ।
त्वामभ्यर्चितुमिच्छामि काममेतं कुरुष्व मे ॥ २३ ॥

इत्ययोध्याकाण्डे भरद्वाजाश्रमे निवासो नाम नवतितमः
सर्गः ॥ ९० ॥

## CAPUT XCI.

### HOSPITIUM A BHARADVAJO APPARATUM.

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा ।
भरतं कैकयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥ १ ॥
अब्रवीद्भरतस्त्वेनं नन्विदं भवता कृतं ।
पाद्यमर्घ्यं तथातिथ्यं वने यदुपपद्यते ॥ २ ॥
अथोवाच भरद्वाजो भरतं प्रहसन्निव ।
जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येन केनचित् ॥ ३ ॥
सेनायास्तु तवैवास्याः कर्तुमिच्छामि भोजनं ।
मम प्रीतिर्यथारूपा त्वमर्हो मनुजर्षभ ॥ ४ ॥
किमर्थं चापि निक्षिप्य दूरे बलमिहागतः ।
कस्मान्नेहोपयातोऽसि सबलः सहबान्धवः ॥ ५ ॥
भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनं ।
ससैन्यो नोपयातोऽस्मि भगवन् भगवद्भयात् ॥ ६ ॥
राज्ञा हि भगवन् नित्यं राजपुत्रेण वा सदा ।
यत्नतः परिहर्तव्या विषयेषु तपस्विनः ॥ ७ ॥
वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः ।
प्रच्छाद्य महतीं भूमिं भगवन्ननुयान्ति मां ॥ ८ ॥

ते वृक्षान् उदकं भूमिमाश्रमेषूटजांस्तथा ।
मा हिंस्युरिति तेनाहमायातो गुरुभिः सह ॥ ९ ॥
आनीयतामितः सैन्यमित्यादिष्टो महर्षिणा ।
तथा चक्रे स भरतस्ततः प्रीतोऽभवन्मुनिः ॥ १० ॥
अग्निशालां प्रविश्याथ पीत्वापः परिमृज्य च ।
आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत् ॥ ११ ॥
आह्वये विश्वकर्माणमहं त्वष्टारमेव च ।
आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयतां ॥ १२ ॥
आह्वये लोकपालांस्त्रीन् देवान् शक्रमुखांस्तथा ।
आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयतां ॥ १३ ॥
प्राक्स्रोतसश्च या नद्यः प्रत्यक्स्रोतस एव च ।
पृथिव्यामन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ १४ ॥
अन्याः स्रवन्तु मैरेयं सुरामन्याः सुनिष्ठिताः ।
अपराश्चोदकं शीतमिक्षुकाण्डरसोपमं ॥ १५ ॥
आह्वये देवगन्धर्वान् विश्वावसुहहाहुहून् ।
तथैवाप्सरसो देवीर्गन्धर्वीश्चापि सर्वशः ॥ १६ ॥
घृताचीमथ विश्वाचीं मिश्रकेशीमलम्बुषां ।
नागदत्तां च हेमां च भीमामद्रिकृतस्थलीं ॥ १७ ॥
शक्रं याश्चोपतिष्ठन्ति ब्रह्माणं याश्च भामिनीः ।
सर्वास्तुम्बुरुणा सार्धमाह्वये सपरिच्छदाः ॥ १८ ॥

वनं कुरुषु यद्दिव्यं वासोभूषणपत्रवत् ।
दिव्यनारीफलं शश्वत् तत् कौवेरमिहैतु च ॥ १९ ॥
इह मे भगवान् सोमो विधत्तामन्नमुत्तमं ।
भक्ष्यं भोज्यं च शोष्यं च लेह्यं च विविधं बहु ॥ २० ॥
विचित्राणि च माल्यानि पादपप्रच्युतानि च ।
सुरादीनि च पेयानि मांसानि विविधानि च ॥ २१ ॥
एतत् समाधिना युक्तस्तेजसाप्रतिमेन च ।
शिक्षास्वरसमायुक्तं सुव्रतश्चाब्रवीन्मुनिः ॥ २२ ॥
मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ।
आजग्मुस्तानि सर्वाणि दैवतानि पृथक् पृथक् ॥ २३ ॥
मलयं दर्दरं चैव ततः स्वेदनुदोऽनिलः ।
उपस्पृश्य ववौ युक्त्या सुप्रियात्मा सुखं शिवः ॥ २४ ॥
ततोऽभ्यवर्तन्त घना दिव्याः कुसुमवृष्टयः ।
देवदुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५ ॥
प्रववुश्चोत्तमा वाता ननृतुश्चाप्सरोगणाः ।
प्रजगुर्देवगन्धर्वा वीणाः प्रमुमुचुः स्वरान् ॥ २६ ॥
स शब्दो द्यां च भूमिं च प्राणिनां श्रवणानि च ।
विवेशोच्चारितः श्लक्ष्णः समो लयसमन्वितः ॥ २७ ॥
तस्मिन्नुपरते शब्दे दिव्ये श्रोत्रसुखे नृणां ।
ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥ २८ ॥

बभूव हि समा भूमिः समन्तात् पञ्चयोजनं ।
शाद्वलैर्बहुभिश्छन्ना नीलवैदूर्यसंनिभैः ॥ २९ ॥
तस्मिन् कपित्था बिल्वाश्च पनसा बीजपूरकाः ।
आमलक्यो ऽथ चूताश्च बभूवुः फलभूषणाः ॥ ३० ॥
उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् ।
आजगाम नदी सौम्या तीरजैर्बहुभिर्वृता ॥ ३१ ॥
चतुःशालानि शुभ्राणि शालाश्च गजवाजिनां ।
हर्म्यप्रासादसंघातास्तोरणानि शुभानि च ॥ ३२ ॥
सितमेघनिभं चापि राजवेश्म सुतोरणं ।
शुक्लमाल्यकृताकारं दिव्यगन्धसमुक्षितं ॥ ३३ ॥
चतुरश्रमसंबाधं शयनासनवस्त्रवत् ।
दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनपानवत् ॥ ३४ ॥
प्रविवेश महाबाहुरनुज्ञातो महर्षिणा ।
वेश्म तद्रत्नसंपूर्णं भरतः कैकयीसुतः ॥ ३५ ॥
अनुजग्मुश्च तं सर्वे मन्त्रिणः सपुरोहिताः ।
बभूवुश्च मुदा युक्तास्तं दृष्ट्वा वेश्मसंविधिं ॥ ३६ ॥
तत्र राजासनं दिव्यं व्यजनं छत्त्रमेव च ।
भरतो मन्त्रिभिः सार्धमभ्यवर्तत राघवः ॥ ३७ ॥
आसनं पूजयामास रामायाभिप्रणम्य सः ।
बालव्यजनमादाय न्यषीदत् सचिवासने ॥ ३८ ॥

आनुपूर्व्यां निषेदुश्च सर्वे मन्त्रिपुरोहिताः ।
ततः सेनापतिः पश्चात् प्रशास्ता च निषेदतुः ॥ ३९ ॥
ततस्तत्र मुहूर्तेन नद्यः पायसकर्दमाः ।
उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् ॥ ४० ॥
तासामुभयतः कूलं पाण्डुमृत्तिकलेपनाः ।
रम्याश्चावसथा दिव्या ब्राह्मणस्य प्रसादजाः ॥ ४१ ॥
तेनैव च मुहूर्तेन दिव्याभरणभूषिताः ।
आगुर्विंशतिसाहस्राः कुवेरप्रहिताः स्त्रियः ॥ ४२ ॥
याभिर्गृहीतः पुरुषः सोन्माद इव लक्ष्यते ।
आगुर्विंशतिसाहस्रा नन्दनादप्सरोगणाः ॥ ४३ ॥
नारदस्तुम्बुरुर्गोपः सुतनुः सूर्यवर्चसः ।
एते गन्धर्वराजानो भरतस्याग्रतो जगुः ॥ ४४ ॥
अलम्बुषा मिश्रकेशी पुण्डरीका च रामणा ।
उपानृत्यंस्तु भरतं भरद्वाजस्य शासनात् ॥ ४५ ॥
यानि माल्यानि देवेषु यानि चैत्ररथे वने ।
प्रयागे तान्यदृश्यन्त भरद्वाजस्य शासनात् ॥ ४६ ॥
बिल्वा मार्दङ्गिका आसन् साम्यग्राहा बिभीतकाः ।
अश्वत्था नर्तकाश्चासन् भरद्वाजस्य तेजसा ॥ ४७ ॥
ततः सरलतालाश्च तिलकाः सतमालकाः ।
प्रहृष्टास्तत्र संपेतुः कुब्जा भूत्वाथ वामनाः ॥ ४८ ॥

शिंशपामलकी जम्बूर्याश्चान्याः कानने लताः ।
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमे ऽवसन् ॥ ४९ ॥
सुरां सुरापाः पिबति पायसं च बुभुक्षिताः ।
मांसानि च सुमेध्यानि भक्षन्ते यो यदिच्छति ॥ ५० ॥
उच्छाद्य स्नापयन्ति स्म नदीतीरेषु वल्गुषु ।
अप्येकमेकं पुरुषं प्रमदाः सप्त चाष्ट च ॥ ५१ ॥
संवाहयन्त्युपासीना नार्यो रुचिरलोचनाः ।
परिमृज्य तदान्योन्यं पाययन्ति वराङ्गनाः ॥ ५२ ॥
हयान् अश्वतरान् उष्ट्रांस्तथैव सुरभेः सुतान् ।
अभोजयन् वाहनपास्तेषां भोज्यं यथाविधि ॥ ५३ ॥
इक्षूंश्च मधु लाजांश्च भोजयन्ति स्म वारणान् ।
इक्ष्वाकुवरयोधानां चोदयन्तो महाबलाः ॥ ५४ ॥
नाश्वबन्धो ऽश्वमज्ञासीन्न गजं कुञ्जरग्रहः ।
मत्तप्रमत्तमुदिता चमूः सा तत्र संबभौ ॥ ५५ ॥
तर्पिताः सर्वकामैश्च रक्तचन्दनरूषिताः ।
अप्सरोगणसंयुक्ताः सैन्या वाचमुदीरयन् ॥ ५६ ॥
नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान् ।
कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखं ॥ ५७ ॥
इति पदातयोधाश्च हस्त्यश्वारोहबन्धकाः ।
अनाथास्तं विधिं लब्ध्वा वाचमेतामुदीरयन् ॥ ५८ ॥

संप्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः ।
भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥ ५९ ॥
नृत्यन्तश्च हसन्तश्च गायन्तश्चैव सैनिकाः ।
समन्तात् परिधावन्ति माल्योपेताः सहस्रशः ॥ ६० ॥
ततो भुक्तवतां तेषां तदन्नममृतोपमं ।
दिव्यान् उद्वीक्ष्य भक्ष्यांस्तान् नाभवद्भक्षणे मतिः ॥ ६१ ॥
प्रेष्याश्चेट्यश्च वध्वश्च बलस्थाश्चापि सर्वशः ।
बभूवुस्ते भृशं तृप्ताः सर्वे चाहतवाससः ॥ ६२ ॥
नाशुक्लवासास्तत्रासीत् क्षुधितो मलिनोऽपि वा ।
रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६३ ॥
बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः ।
ताश्च कामदुघा गावो द्रुमाश्चासन् मधुच्युताः ॥ ६४ ॥
वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः ।
प्रतप्तपिठरैश्चापि मार्गमायूरकौक्कुटैः ॥ ६५ ॥
अन्नैरपि च वाराहैर्निष्ठानवरसंचयैः ।
फलनिर्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः ॥ ६६ ॥
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च ।
ददृशुर्भाजनस्थानि तीर्थेषु सरितां नराः ॥ ६७ ॥
शुक्लान् अंशुमतश्चापि दन्तधावनसंचयान् ।
शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥ ६८ ॥

दर्पणान् परिमृष्टांश्च वाससां चापि संचयान् ।
पादुकोपानहौं चापि युग्मान्यत्र सहस्रशः ॥ ६९ ॥
आञ्जनीः कङ्कतान् कूर्चांश्छत्त्राणि च धनूंषि च ।
मर्मत्राणानि चित्राणि शयनान्यासनानि च ॥ ७० ॥
प्रतिपानह्रदान् पूर्णान् खरोष्ट्रगजवाजिनां ।
अवगाह्य सुतीर्थांश्च स्वच्छतोयान् सुखप्लवान् ॥ ७१ ॥
नीलवैदूर्यवर्णांश्च मृदून् यवससंचयान् ।
निर्वापार्थं पशूनां तु ददृशुस्तत्र सर्वशः ॥ ७२ ॥
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतं ।
दृष्ट्वातिथ्यं कृतं तादृग्भरतस्य महर्षिणा ॥ ७३ ॥
इत्येवं रममाणानां देवानामिव नन्दने ।
भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यतिवर्तत ॥ ७४ ॥
प्रतिजग्मुश्च ता नद्यो गन्धर्वाश्च यथागतं ।
भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ७५ ॥

इत्ययोध्याकाण्डे भरद्वाजातिथ्यं नाम एकनवतितमः सर्गः
॥ ९१ ॥

## CAPUT XCII.

### Bharatas a Bharadvajo dimissus.

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ।
कृतातिथ्यं भरद्वाजं कामादभिजगाम ह ॥ १ ॥
तमृषिः पुरुषव्याघ्रं प्रेक्ष्य प्राञ्जलिमागतं ।
हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥
कच्चित् पुत्र सुखा रात्रिस्तवास्मद्विषये गता ।
समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ॥ ३ ॥
तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च ।
आश्रमादुपनिष्क्रान्तमृषिमुत्तमतेजसं ॥ ४ ॥
सुखोषितोऽस्मि रजनीं समग्रबलवाहनः ।
बलवत् तर्पितश्चाहं सामात्यो भगवंस्त्वया ॥ ५ ॥
अपेतक्लमसंतापाः सुभिक्षाः सुप्रतिश्रयाः ।
अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः ॥ ६ ॥
आमन्त्रयेऽहं भगवन् कामं त्वामृषिसत्तम ।
समीपं प्रस्थितं भ्रातुर्मैत्रेणेक्षस्व चक्षुषा ॥ ७ ॥
आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः ।
आचक्ष्व कतमो मार्गः कियान् इति च शंस मे ॥ ८ ॥

इति पृष्टस्तु भरतं भ्रातृदर्शनलालसं ।
प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥ ९ ॥
भरतार्द्धतृतीयेषु योजनेष्वजने वने ।
चित्रकूटो गिरिस्तत्र रम्यनिर्झरकाननः ॥ १० ॥
उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी ।
पुष्पितद्रुमसंछन्ना नानापक्षिनिषेविता ॥ ११ ॥
तामन्तरा च सरितं चित्रकूटं च पर्वतं ।
तयोः पर्णकुटी तात तत्र तौ वसतो ध्रुवं ॥ १२ ॥
दक्षिणेन च मार्गेण सव्यं दक्षिणमेव च ।
वाहयस्व महाभाग ततो द्रक्ष्यसि राघवं ॥ १३ ॥
प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हा ब्राह्मणं पर्यवारयन् ॥ १४ ॥
वेपमाना कृशा दीना सह देव्या सुमित्रया ।
कौशल्या तत्र जग्राह कराभ्यां चरणौ मुनेः ॥ १५ ॥
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ।
कैकेयी तस्य जग्राह चरणौ सव्यपत्रपा ॥ १६ ॥
तं प्रदक्षिणमागम्य भगवन्तं महामुनिं ।
अदूराद्भरतस्यैव तस्थौ दीनमनास्तदा ॥ १७ ॥
ततः पप्रच्छ भरतं भरद्वाजो दृढव्रतः ।
विशेषं ज्ञातुमिच्छामि मातॄणां तव राघव ॥ १८ ॥

एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ।
उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः ॥ १९ ॥
यामिमां भगवन् दीनां शोकानाशनकर्शितां ।
पितुर्हि महिषीं दीनां देवतामिव पश्यसि ॥ २० ॥
एषा तं पुरुषव्याघ्रं व्याघ्रविक्रान्तगामिनं ।
कौशल्या सुषुवे रामं धातारमदितिर्यथा ॥ २१ ॥
अस्या वामं भुजं श्लिष्टा येषा तिष्ठति दुर्मनाः ।
कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २२ ॥
इयं सुमित्रा दुःखार्त्ता देवी राज्ञश्च मध्यमा ।
एतस्यास्तु सुतौ देव्याः कुमारौ देववर्णिनौ ॥ २३ ॥
यस्याः कृते नरव्याघ्रौ जीवनाशमितो गतौ ।
राजा पुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २४ ॥
क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीं ।
ऐश्वर्यकामां कैकेयीमनार्यामार्यरूपिणीं ॥ २५ ॥
ममैतां मातरं विद्धि नृशंसां पापनिश्चयां ।
यतोमूलं हि पश्यामि व्यसनं महदात्मनः ॥ २६ ॥
इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा ।
स निःशश्वास ताम्राक्षः क्रुद्धो नाग इव श्वसन् ॥ २७ ॥
भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तदा ।
प्रत्युवाच महाबुद्धिरिदं वचनमर्थवत् ॥ २८ ॥

न दोषेणावगन्तव्या कैकेयी भरत त्वया ।
रामप्रव्राजनं ह्येतत् सुखोदर्कं भविष्यति ॥ २९ ॥
अभिवाद्याथ संसिद्धः कृत्वा चैनं प्रदक्षिणं ।
आमन्त्र्य भरतः सैन्यं युज्यतामित्यचोदयत् ॥ ३० ॥
ततो वाजिरथान् युक्तान् दिव्यान् हेमपरिष्कृतान् ।
अध्यारोहत् प्रयाणार्थं बहून् बहुविधो जनः ॥ ३१ ॥
गजकन्या गजाश्चैव हेमकक्ष्याः पताकिनः ।
जीमूता इव घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३२ ॥
विविधान्यपि यानानि महान्ति च लघूनि च ।
प्रययुः सुमहार्हाणि पादैरेव पदातयः ॥ ३३ ॥
अथ यानप्रवेकैस्तु कौशल्याप्रमुखाः स्त्रियः ।
रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्तदा ॥ ३४ ॥
चन्द्रार्कतरुणाभासां नृयुक्तां शिबिकां शुभां ।
आस्थाय प्रययौ श्रीमान् भरतः सपरिच्छदः ॥ ३५ ॥
सा प्रयाता बभौ सेना गजवाजिरथाकुला ।
दक्षिणां दिशमावृत्य महामेघ इवोत्थितः ॥ ३६ ॥

इत्ययोध्याकाण्डे भरतानुज्ञा नाम द्विनवतितमः सर्गः
॥ ९२ ॥

## CAPUT XCIII.

### CHITRACUTI MONTIS CONSPECTUS.

तया महत्या यायिन्या ध्वजिन्या वनवासिनः ।
अर्दिता यूथपा मत्ताः सयूथा विप्रदुद्रुवुः ॥ १ ॥
ऋक्षाः पृषतसंघाश्च रुरवश्च समन्ततः ।
दृश्यन्ते वनराजीषु गिरिष्वपि नदीषु च ॥ २ ॥
सागरौघनिभा सेना भरतस्य महात्मनः ।
महीं संछादयामास प्रावृषि द्यामिवाम्बुदः ॥ ३ ॥
तुरंगौघैरवतता वारणैश्च महाबलैः ।
अनालक्ष्या चिरं कालं तस्मिन् देशे बभूव भूः ॥ ४ ॥
स यात्वा दूरमध्वानं संपरिश्रान्तवाहनः ।
उवाच भरतः श्रीमान् वशिष्ठं मन्त्रिणां वरं ॥ ५ ॥
यादृशं लक्ष्यते रूपं यथा चैव श्रुतं मया ।
व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ६ ॥
अयं गिरिश्चित्रकूट इयं मन्दाकिनी नदी ।
एतत् प्रकाशते दूरान्नीलमेघनिभं वनं ॥ ७ ॥
गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति ।
वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ८ ॥
मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु ।
नीला इवातपापाये तोयं तोयधरा घनाः ॥ ९ ॥

किंनराचरितोद्देशं पश्य शत्रुघ्न पर्वतं ।
हयैः समन्तादाकीर्णं मकरैरिव सागरं ॥ १० ॥
एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः ।
वायुप्रविद्धाः शरदि मेघराज्य इवाम्बरे ॥ ११ ॥
कुर्वन्ति कुसुमापीडान् शिरःसु सुरभीन् अमी ।
मेघप्रकाशैः फलकैर्दाक्षिणात्या नरा यथा ॥ १२ ॥
निष्कूजमिव भूत्वेदं वनं घोरप्रदर्शनं ।
अयोध्येव जनाकीर्णा सांप्रतं प्रतिभाति मे ॥ १३ ॥
खुरैरुदीरितो रेणुर्दिवं प्रच्छाद्य तिष्ठति ।
तं वहत्यनिलः शीघ्रं कुर्वन्निव मम प्रियं ॥ १४ ॥
स्यन्दनांस्तुरगोपेतान् सूतमुख्यैरधिष्ठितान् ।
एतान् संपततः शीघ्रं पश्य शत्रुघ्न कानने ॥ १५ ॥
एतान्वित्रासितान् पश्य बर्हिणः प्रियदर्शनान् ।
मनोग्राह्या लक्ष्यन्ते कुसुमैश्चित्रिता इव ॥ १६ ॥
मृगा मृगीभिः सहिता बहवः पृषता वने ।
एतमभ्यागते शैलमधिवासं पतत्रिणां ॥ १७ ॥
अतिमात्रमयं देशो मनोज्ञः प्रतिभाति मे ।
तापसानां निवासोऽयं व्यक्तं स्वर्गपथो यथा ॥ १८ ॥
साधु सैन्याः प्रतिष्ठन्तां विचिन्वन्तु च काननं ।
यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ ॥ १९ ॥

भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः ।
विविशुस्तद्वनं शूरा धूमाग्रं ददृशुस्ततः ॥ २० ॥
ते समालोक्य धूमाग्रमूचुर्भरतमागताः ।
नामनुष्ये भवत्यग्निर्व्यक्तमत्रैव राघवौ ॥ २१ ॥
अथ नात्र नरव्याघ्रौ राजपुत्रौ परंतपौ ।
अन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः ॥ २२ ॥
तच्छ्रुत्वा भरतस्तेषां वचनं साधुसंमतं ।
सैन्यान् उवाच सर्वांस्तान् अमित्रबलमर्दनः ॥ २३ ॥
यत्ता भवन्तः तिष्ठन्तु नेतो गन्तव्यमग्रतः ।
अहमेको गमिष्यामि सुमन्त्रो धृतिरेव च ॥ २४ ॥
एवमुक्तास्ततः सैन्यास्तत्र तस्थुः समन्ततः ।
भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधौ ॥ २५ ॥
व्यवस्थिता या भरतेन सा चमूर्- ।
निरीक्षमाणापि च धूममग्रतः ।
बभूव हृष्टा न चिरेण जानती ।
प्रियस्य रामस्य समागमं तदा ॥ २६ ॥

इत्ययोध्याकाण्डे चित्रकूटदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

## CAPUT XCIV.

### CHITRACUTI DESCRIPTIO.

दीर्घकालोषितस्तत्र गिरौ गिरिवनप्रियः ।
वैदेह्याः प्रियमाकाङ्क्षन् स्वं च चित्तं विलोभयन् ॥ १ ॥
अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् ।
भार्याममरसंकाशः शचीमिव पुरंदरः ॥ २ ॥
न राज्याद्भ्रंशनं सीते न सुहृद्भिर्विनाभवः ।
मनो मे बाधते दृष्ट्वा रमणीयमिदं वनं ॥ ३ ॥
पश्येममचलं भद्रे नानाद्विजगणायुतं ।
शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विभूषितं ॥ ४ ॥
केचिद्रजतसंकाशाः केचित् क्षतजसंनिभाः ।
पीतमाञ्जिष्ठवर्णाश्च केचिन्मरकतप्रभाः ॥ ५ ॥
पुष्पार्ककेतकाभाश्च केचिज्ज्योतीरसप्रभाः ।
विराजन्तेऽचलेन्द्रस्य देशा धातुविभूषिताः ॥ ६ ॥
नानामृगगणैर्द्वीपितरक्ष्वृक्षगणैर्वृतः ।
अदुष्टैर्भात्ययं शैलो बहुपक्षिसमाकुलः ॥ ७ ॥
आम्रजम्ब्वसनैर्लोध्रैः प्रियालैः पनसैर्धवैः ।
अङ्कोलैर्भव्यतिनिशैर्बिल्वतिन्दुकवेणुभिः ॥ ८ ॥
काश्मर्यरिष्टवरणैर्मधुकैस्तिलकैस्तथा ।
बदर्यामलकैर्नीपैर्वेत्रधन्वनबीजकैः ॥ ९ ॥

पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः ।
एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥ १० ॥
शैलप्रस्थेषु रम्येषु पश्येमान् कामहर्षणान् ।
किंनरान् द्वन्द्वशो भद्रे रममाणान् मनस्विनः ॥ ११ ॥
शाखावसक्तान् खड्गांश्च प्रवराण्यम्बराणि च ।
पश्य विद्याधरस्त्रीणां क्रीडोद्देशान् मनोरमान् ॥ १२ ॥
जलप्रपातैरुद्भेदैर्निःस्यन्दैश्च क्वचित् क्वचित् ।
स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥ १३ ॥
गुहासमीरणो गन्धान् नानापुष्पभवान् वहन् ।
घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥ १४ ॥
यदीह शरदोऽनेकास्त्वया सार्द्धमनिन्दिते ।
लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति ॥ १५ ॥
बहुपुष्पफले रम्ये नानाद्विजगणायुते ।
विचित्रशिखरे ह्यस्मिन् रतवान् अस्मि भामिनि ॥ १६ ॥
अनेन वनवासेन मया प्राप्तं फलद्वयं ।
पितुश्चानृण्यता धर्मे भरतस्य प्रियं तथा ॥ १७ ॥
वैदेहि रमसे कच्चिच्चित्रकूटे मया सह ।
पश्यन्ती विविधान् भावान् मनोवाक्कायसंयता ॥ १८ ॥
इदमेवामृतं प्राहू राज्ञि राजर्षयः परे ।
वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९ ॥

शिलाः शैलस्य शोभन्ते विशालाः शतशोऽभितः ।
बहुला बहुलैर्वर्णैर्नीलपीतसितारुणैः ॥ २० ॥
निशि भान्त्यचलेन्द्रस्य हुताशनशिखा इव ।
ओषध्यः स्वप्रभालक्ष्म्या भ्राजमानाः सहस्रशः ॥ २१ ॥
केचित् क्षयनिभा देशाः केचिदुद्यानसंनिभाः ।
केचिदेकशिला भान्ति पर्वतस्यास्य भामिनि ॥ २२ ॥
कुटपुन्नागबकुलभूर्जपत्रोत्तरच्छदान् ।
कामिनां स्वास्तरान् पश्य कुशेशयदलायुतान् ॥ २३ ॥
मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः ।
कामिभिर्वनिते पश्य फलानि विविधानि च ॥ २४ ॥
वस्वौकसारां नलिनीमतीत्यैवोत्तरान् कुरून् ।
पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः ॥ २५ ॥
इमं तु कालं वनिते विजह्रिवांस्-
त्वया च सीते सह लक्ष्मणेन च ।
रतिं प्रपत्स्ये कुलधर्मवर्धिनीं
सतां पथि स्वैर्नियमैः परैः स्थितः ॥ २६ ॥

इत्ययोध्याकाण्डे चित्रकूटवर्णनं नाम चतुर्नवतितमः सर्गः ॥ ९४ ॥

## CAPUT XCV.

### Mandacinis fluvii laudes.

अथ शैलाद्विनिष्क्रम्य मैथिलीं कोशलेश्वरः ।
अदर्शयच्छुभजलां रम्यां मन्दाकिनीं नदीं ॥ १ ॥
अब्रवीच्च वरारोहां चारुचन्द्रनिभाननां ।
विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २ ॥
विचित्रपुलिनां रम्यां हंससारससेवितां ।
कुसुमैरुपसंपन्नां पश्य मन्दाकिनीं नदीं ॥ ३ ॥
नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः ।
राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥
मृगयूथनिपीतानि कलुषाम्भांसि सांप्रतं ।
तीर्थानि रमणीयानि रतिं संजनयन्ति मे ॥ ५ ॥
जटाजिनधराः काले वल्कलोत्तरवाससः ।
ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये ॥ ६ ॥
आदित्यमुपतिष्ठन्ते नियमादूर्द्ध्वबाहवः ।
एते परे विशालाक्षि मुनयः संशितव्रताः ॥ ७ ॥
मारुतोद्धूतशिखरैः प्रनृत्त इव पर्वतः ।
पादपैः पुष्पपत्राणि सृजद्भिरभितो नदीं ॥ ८ ॥
क्वचिन्मणिनिकाशोदां क्वचित् पुलिनशालिनीं ।
क्वचित् सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीं ॥ ९ ॥

निर्धूतान् वायुना पश्य विततान् पुष्पसंचयान् ।
पोप्लूयमानान् अपरान् पश्य त्वं जलमध्यगान् ॥ १० ॥
पश्यैते वल्गुवचसो रथाङ्गाह्वयना द्विजाः ।
अधिरोहन्ति कल्याणि निष्कूजन्तः शुभा गिरः ॥ ११ ॥
दर्शनं चित्रकूटस्य मन्दाकिन्याश्च शोभने ।
अधिकं पुरवासाद्धि मन्ये तव च दर्शनं ॥ १२ ॥
विधूतकल्मषैः सिद्धैस्तपोदमशमान्वितैः ।
नित्यविक्षोभितजलां विगाहस्व मया सह ॥ १३ ॥
सखीवच्च विगाहस्व सीते मन्दाकिनीमिमां ।
कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ॥ १४ ॥
त्वं पौरजनवद्व्यालान् अयोध्यामिव पर्वतं ।
मन्यस्व वनिते नित्यं सरयूवदिमां नदीं ॥ १५ ॥
लक्ष्मणश्चापि धर्मात्मा मन्निदेशे व्यवस्थितः ।
त्वं चानुकूला वैदेहि प्रीतिं जनयथो मम ॥ १६ ॥
उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः ।
नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह ॥ १७ ॥
इमां हि पश्यन् मृगयूथलोडितां ।
निपीततोयां गजसिंहवानरैः ।
सुपुष्पितैस्तीररुहैरलंकृतां ।
न सोऽस्ति योऽस्यां न गतक्लमो भवेत् ॥ १८ ॥

इतीव रामो बहुसंगतं वचः ।
प्रियासहायः सरितं प्रति ब्रुवन् ।
चचार रम्यं नयनाञ्जनप्रभं ।
स चित्रकूटं रघुवंशवर्धनः ॥ ११ ॥

इत्ययोध्याकाण्डे मन्दाकिनीवर्णना नाम पञ्चनवतितमः
सर्गः ॥ ९५ ॥

---

## CAPUT XCVI.

### Telum magicum emissum.

पञ्चनवतितमोऽग्रिमः सर्गः क्षेपकः । रामस्तु इत्यादि ॥ Schol.

रामस्तु नलिनीं रम्यां चित्रकूटं च पर्वतं ।
सुतां जनकराजस्य दर्शयित्वा न्यवर्तत ॥ १ ॥
उत्तरे तु गिरेः पादे चित्रकूटस्य राघवः ।
ददर्श कन्दरं रम्यं शिलाधातुसमन्वितं ॥ २ ॥
सुप्रवृद्धैस्तरुभिः पुष्पभारावलम्बिभिः ।
संवृतं च रहस्यं च मत्तद्विजगणायुतं ॥ ३ ॥
तं दृष्ट्वा सर्वभूतानां मनोदृष्टिहरं दरं ।
उवाच सीतां काकुत्स्थो वनदर्शनविस्मितां ॥ ४ ॥

वैदेहि रमते चक्षुस्तवास्मिन् गिरिकन्दरे ।
परिश्रमविघातार्थं साधु तावदिहास्यतां ॥ ५ ॥
त्वदर्थमिह विन्यस्ता त्वियं श्लक्ष्णसमा शिला ।
यस्याः पार्श्वे तरुः पुष्पैः प्रकृष्ट इव केशरः ॥ ६ ॥
राघवेणैवमुक्ता सा सीता प्रकृतिदक्षिणा ।
उवाच प्रणयात् स्निग्धमिदं श्लक्ष्णतरं वचः ॥ ७ ॥
अवश्यकार्यं वचनं तव मे रघुनन्दन ।
बहुशोऽभ्रामि ते चाद्य तव चैव मनोरथः ॥ ८ ॥
एवमुक्ता वरारोहा शिलां तामुपसर्पत ।
सह भर्त्रानवद्याङ्गी रतिकामा मनस्विनी ॥ ९ ॥
तामेवं ब्रुवतीं सीतां रामो वचनमब्रवीत् ।
रम्यं पश्यसि भृतार्थे वनं पुष्पितपादपं ॥ १० ॥
गजदन्तक्षतान् वृक्षान् पश्य निर्यासवर्षिणः ।
झिल्लिका विरुवद्दीर्घं रुदतीव समन्ततः ॥ ११ ॥
पुत्रप्रियोऽसौ शकुनिः पुत्र पुत्रेति भाषते ।
मधुरां करुणां वाचं पुरेव जननी मम ॥ १२ ॥
विहगो भृङ्गराजोऽयं सालस्कन्धसमास्थितः ।
संगीतमिव कुर्वाणः कोकिलस्यानुकूजति ॥ १३ ॥
अयं वा बालकः शङ्के कोकिलानां विहंगमः ।
सुखबद्धमसंबद्धं तथा ह्येष प्रभाषते ॥ १४ ॥

एषा कुसुमितं चूतं पुष्पभारनता लता ।
दृश्यते प्रणयाच्छ्रन्ते मामिव त्वमुपाश्रिता ॥ १५ ॥
एवमुक्त्वा प्रियस्याङ्के मैथिली प्रियभाषिणी ।
भूयस्तरां त्वनिन्द्याङ्गी समारोहत भामिनी ॥ १६ ॥
अङ्के तु परिवर्तन्ती सीता सुरसुतोपमा ।
हर्षयामास रामस्य मनो मनसिजार्पितं ॥ १७ ॥
स निर्घृष्यांगुलिं रामो धौते मनःशिलोच्चये ।
चकार तिलकं तस्या ललाटे रुचिरं तदा ॥ १८ ॥
बालार्कसमवर्णेन तेन सा गिरिधातुना ।
चकाशे विनिविष्टेन ससंध्येव निशासिता ॥ १९ ॥
केशरस्य च पुष्पाणि करेणामृद्य राघवः ।
अलकं पूरयामास मैथिल्याः प्रीतमानसः ॥ २० ॥
अभिरम्य तथा तस्यां शिलायां रघुनन्दनः ।
अन्वीयमानो वैदेह्या देशमन्यं जगाम ह ॥ २१ ॥
विचरन्ती तदा सीता ददर्श हरियूथपं ।
वने बहुमृगाकीर्णे वित्रस्ता राममाश्लिषत् ॥ २२ ॥
रामस्तां परिरब्धाङ्गीं परिरभ्य महाभुजः ।
शान्त्वयामास वामोरूमवभर्त्स्याथ वानरं ॥ २३ ॥
मनःशिलायास्तिलकः सीतायाः सोऽथ वक्षसि ।
समदृश्यत संक्रान्तो रामस्य विपुलौजसः ॥ २४ ॥

प्रजहास ततः सीता गते वानरपुंगवे ।
दृष्ट्वा भर्तरि संक्रान्तमपाङ्गं समनःशिलं ॥ २५ ॥
नातिदूरे त्वशोकानां प्रदीप्तमिव काननं ।
ददर्श पुष्पस्तवकैस्तरुणैरिव वानरैः ॥ २६ ॥
वैदेही वचनं चेदमब्रवीद्राममशोककुसुमार्थिनी ।
साधु तदभिगच्छाव वनमिक्ष्वाकुनन्दन ॥ २७ ॥
तस्याः प्रिये स्थितो रामो देव्या दिव्यानुरूपया ।
सहितस्तदशोकानां विशोकः प्रययौ वनं ॥ २८ ॥
तदशोकवनं रामः सभार्यो व्यचरत् तदा ।
गिरिपुत्र्या पिनाकीव सह हैमवतं वनं ॥ २९ ॥
तावन्योन्यमशोकस्य पुष्पैः पल्लवधारिभिः ।
समलंचक्रतुरुभौ कामिनौ नीललोहितौ ॥ ३० ॥
आबद्धवनमालौ तौ कृतापीडावतंसकौ ।
भार्यापती तमचलं शोभयांचक्रतुर्भृशं ॥ ३१ ॥
एवं स विविधान् देशान् दर्शयित्वा प्रियां प्रियः ।
आजगामाश्रमपदं सुसंमृष्टमलंकृतं ॥ ३२ ॥
प्रत्युज्जगाम तं भ्राता लक्ष्मणो गुरुवत्सलः ।
दर्शयन् विविधं कर्म सौमित्रिः सुकृतं तदा ॥ ३३ ॥
शुद्धबाणहतांस्तत्र मेध्यान् कृष्णमृगान् दश ।
राशीकृतान् शुष्यमाणान् अन्यान् कांश्चन कांश्चन ॥ ३४ ॥

तद्दृष्ट्वा कर्म सौमित्रेर्भ्राता प्रीतोऽभवत् तदा ।
क्रियतां बलयश्चेति रामः सीतामथान्वशात् ॥ ३५ ॥
अग्रं प्रदाय भूतेभ्यः सीताथ वरवर्णिनी ।
तयोरुपाददाद्भ्रात्रोर्मधु मांसं च संस्कृतं ॥ ३६ ॥
तयोस्तुष्टिमथोत्पाद्य वीरयोः कृतशौचयोः ।
विधिवज्जानकी पश्चाच्चक्रे सा प्राणधारणं ॥ ३७ ॥
शिष्टं मांसं निकृत्तं यच्छोषणायोपकल्पितं ।
तद्रामवचनात् सीता काकेभ्यः पर्यरक्षत ॥ ३८ ॥
तां ददर्श तदा भर्ता काकेनायासितां दृढं ।
यः स धरान्तरचरः कामचारी विहंगमः ॥ ३९ ॥
काकेनारोध्यमानां तां रामोऽद्राक्षत्सदातुरां ।
सा चुकोपानवद्याङ्गी भर्तृप्रणयदर्पिता ॥ ४० ॥
रक्षितश्च तां काको वारयन्तीं पुनः पुनः ।
कोपयामास वैदेहीं पक्षतुण्डनखैस्तुदन् ॥ ४१ ॥
तस्याः प्रस्फुरमाणोष्ठं भ्रुकुटीपुटसूचितं ।
मुखमालोक्य काकुत्स्थस्तं काकं प्रत्यषेधयत् ॥ ४२ ॥
स धृष्टमानी विहगो रामवाक्यमचिन्तयन् ।
सीतामभिपपातैव ततश्चुक्रोध राघवः ॥ ४३ ॥
सोऽभिमन्त्र्य शरैषीकामैषीकास्त्रेण वीर्यवान् ।
काकं तमभिसंधाय ससर्ज पुरुषर्षभः ॥ ४४ ॥

स तेनाभिद्रुतः काकस्त्रीन् लोकान् पर्यगात् ततः ।
देवैर्दत्तवरः पक्षी धरान्तरचरो लघुः ॥ ४५ ॥
यत्र यत्रागमत् काकस्तत्र तत्र ददर्श ह ।
ईषीकाभूतमाकाशं स रामं पुनरागमत् ॥ ४६ ॥
स मूर्ध्ना न्यपतत् काको राघवस्य महात्मनः ।
सीतायास्तत्र पश्यन्त्या मानुषीमीरयन्गिरं ॥ ४७ ॥
प्रसादं कुरु मे राम प्राणे सामथ्यमस्तु मे ।
अस्त्रस्यास्य प्रभावेन शरणं न लभे क्वचित् ॥ ४८ ॥
तं काकमब्रवीद्रामः पादयोः शिरसा गतं ।
सानुक्रोशतया धीमान् इदं वचनमर्थवत् ॥ ४९ ॥
मया रोषपरीतेन सीताप्रियहितार्थिना ।
अस्त्रमेतत् समाधाय त्वद्वधायाभिमन्त्रितं ॥ ५० ॥
यत् तु मे चरणौ मूर्ध्ना गतस्त्वं जीवितेप्सया ।
अत्रास्त्यवेक्षा त्वयि मे रक्ष्यो हि शरणागतः ॥ ५१ ॥
अमोघं क्रियतामस्त्रमेकमङ्गं परित्यज ।
किमङ्गं शातयतु ते शरैषीका ब्रवीहि मे ॥ ५२ ॥
एतावद्धि मया शक्यं तव कर्तुं प्रियं खग ।
एकाङ्गहीनं ह्यस्त्रेण जीवितं मरणाद्वरं ॥ ५३ ॥
एवमुक्तस्तु रामेण संप्रधार्य स वायसः ।
अभ्यगच्छद्द्वयोरक्ष्णोस्त्यागमेकस्य पण्डितः ॥ ५४ ॥

सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहं ।
एकनेत्रो हि जीवेयं त्वत्प्रसादान्नराधिप ॥ ५५ ॥
रामानुज्ञातमस्त्रं तत् काकस्य नयनेऽपतत् ।
वैदेही विस्मिता तत्र काकस्य नयने हृते ॥ ५६ ॥
निपत्य शिरसा काको जगामाशु यथेप्सितं ।
लक्ष्मणानुचरो रामश्चकारानन्तरक्रियाः ॥ ५७ ॥

इत्ययोध्याकाण्डे ९६ सर्गः प्रक्षिप्तः ॥ Schol.

इत्ययोध्याकाण्डे ईषीकास्त्रविसर्जनं नाम षण्णवतितमः सर्गः ॥ ९६ ॥

---

## CAPUT XCVII.

### LAXMANAE IRA.

तां तथा दर्शयित्वा तु मैथिलीं गिरिनिम्नगां ।
निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥ १ ॥
इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ।
एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ २ ॥
तथा तत्रासतस्तस्य भरतस्योपयायिनः ।
सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभःस्पृशौ ॥ ३ ॥

तेन स्वनेन महता वर्धमानेन बोधिताः ।
गुहाः संतत्यजुर्व्याघ्रा निलिल्युर्बिलवासिनः ॥ ४ ॥
समुत्पेतुः खगास्त्रस्ता मृगयूथा विदुद्रुवुः ।
ऋक्षाश्चोत्ससृजुर्वृक्षान् प्रपेदुर्हरयो गुहाः ॥ ५ ॥
दावाग्नेरिव वित्रस्ता दुद्रुवुर्गजयूथपाः ।
व्यजृम्भन्त महासिंहा महिषाश्च व्यलोकयन् ॥ ६ ॥
तांश्च विप्रद्रुतान् दृष्ट्वा तं च श्रुत्वा महास्वनं ।
उवाच रामः सौमित्रिं लक्ष्मणं दीप्ततेजसं ॥ ७ ॥
हन्त लक्ष्मण पश्येह सुमित्रा सुप्रजास्त्वया ।
भीमस्तनितगम्भीरं तुमुलः श्रूयते स्वनः ॥ ८ ॥
गजयूथानि वारण्ये महिषा वा महावने ।
वित्रासिता मृगाः सिंहैः सहसा प्रद्रुता दिशः ॥ ९ ॥
राजा वा राजपुत्रो वा मृगयामटते वने ।
अन्यद्वा श्वापदं किंचित् सौमित्रे ज्ञातुमर्हसि ॥ १० ॥
सुदुश्चरो गिरिश्चायं पक्षिणामपि लक्ष्मण ।
सर्वमेतद्यथातत्त्वमचिराज्ज्ञातुमर्हसि ॥ ११ ॥
स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितं ।
प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमवैक्षत ॥ १२ ॥
उदङ्मुखः प्रेक्षमाणो ददर्श महतीं चमूं ।
रथाश्वगजसंबाधां यत्तैर्युक्तां पदातिभिः ॥ १३ ॥

तामश्वगजसंपूर्णां रथध्वजविभूषितां ।
शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥ १४ ॥
अग्निं संशमयत्वार्यः सीता च भजतां गुहां ।
सज्जं कुरुष्व चापं च शरांश्च कवचं तथा ॥ १५ ॥
तं रामः पुरुषव्याघ्रो लक्ष्मणं प्रत्युवाच ह ।
अङ्गावेक्षस्व सौमित्रे कस्येमां मन्यसे चमूं ॥ १६ ॥
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।
दिधक्षन्निव सेनां तां रुषितः पावको यथा ॥ १७ ॥
संपन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनं ।
आवां हन्तुं समभ्येति भरतः कैकयीसुतः ॥ १८ ॥
एष वै सुमहान् श्रीमान् विटपी संप्रकाशते ।
विराजत्युज्ज्वलस्कन्धः कोविदारध्वजो रथे ॥ १९ ॥
भजन्त्येते यथाकाममश्वान् आरुह्य शीघ्रगान् ।
एते भ्राजन्ति संहृष्टा गजान् आरुह्य सादिनः ॥ २० ॥
गृहीतधनुषौ चावां गिरिं वीर श्रयावहे ।
अथवेहैव तिष्ठावः संनद्धावुद्यतायुधौ ॥ २१ ॥
अपि नौ वशमागच्छेत् कोविदारध्वजो वने ।
अपि द्रक्ष्यामि भरतं यत्कृते व्यसनं महत् ॥ २२ ॥
त्वया राघव संप्राप्तं सीतया च मया तथा ।
यन्निमित्तं भवान् राज्याच्च्युतो राघवशाश्वतात् ॥ २३ ॥

संप्राप्तोऽयमरिर्वीर भरतो वध्य एव मे ।
भरतस्य वधे दोषं न हि पश्यामि राघव ॥ २४ ॥
पूर्वापकारिणं हत्वा न ह्यधर्मेण युज्यते ।
पूर्वापकारी भरतस्त्यक्तधर्मश्च राघव ॥ २५ ॥
अद्य पुत्रं हतं संख्ये कैकेयी राज्यकामुका ।
मया पश्येत् सुदुःखार्त्ता हस्तिभग्नमिव द्रुमं ॥ २६ ॥
कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवां ।
कलुषेणाद्य महता मेदिनी परिमुच्यतां ॥ २७ ॥
अद्येमं संयतं क्रोधमसत्कारं च मानद ।
मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनं ॥ २८ ॥
अद्यैव चित्रकूटस्य काननं निशितैः शरैः ।
छिन्दन् शत्रुशरीराणि करिष्ये शोणितोक्षितं ॥ २९ ॥
शरैर्निर्भिन्नहृदयान् कुञ्जरांस्तुरगांस्तथा ।
श्वापदाः परिकर्षन्तु नरांश्च निहतान् मया ॥ ३० ॥
शराणां धनुषश्चाहमनृणोऽस्मिन् महावने ।
ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥ ३१ ॥

इत्ययोध्याकाण्डे लक्ष्मणक्रोधो नाम सप्तनवतितमः सर्गः
॥ ९७ ॥

## CAPUT XCVIII.

### LAXMANAS MITIGATUS.

असंक्रुद्धस्तु सौमित्रिं लक्ष्मणं क्रोधमूर्च्छितं ।
रामः संशमयामास वचनं चेदमब्रवीत् ॥ १ ॥
किमत्र धनुषा कार्यमसिना वा सचर्मणा ।
महेष्वासे महाप्राज्ञे भरते स्वयमागते ॥ २ ॥
पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमाहवे ।
किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥ ३ ॥
यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत् प्रतिगृह्णीयां भक्ष्यान् विषकृतान् इव ॥ ४ ॥
धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ।
इच्छामि भवतामर्थे एतत् प्रतिशृणोमि ते ॥ ५ ॥
भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण ।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ६ ॥
नेयं मम मही सौम्य दुर्लभा सागराम्बरा ।
न हीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥ ७ ॥
यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद ।
भवेन्मम सुखं किंचिद्भस्म तत् कुरुतां शिखी ॥ ८ ॥

मन्ये ऽहमागतो ऽयोध्यां भरतो भ्रातृवत्सलः ।
मम प्राणात् प्रियतरः कुलधर्ममनुस्मरन् ॥ ९ ॥
श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणं ।
जानक्या सहितं वीर त्वया च पुरुषोत्तम ॥ १० ॥
स्नेहेनाक्रान्तहृदयः शोकेनाकुलितेन्द्रियः ।
द्रष्टुमभ्यागतो ह्येष भरतो नान्यथा गतः ॥ ११ ॥
अम्बां च केकयीं हृष्य परुषं चाप्रियं वदन् ।
प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः ॥ १२ ॥
प्राप्तकालं यदेवास्मान् भरतो द्रष्टुमर्हति ।
अस्मासु मनसाप्येष नाहितं किंचिदाचरेत् ॥ १३ ॥
विप्रियं कृतपूर्वं ते भरतेन कदा नु किं ।
ईदृशं वा भयं ते ऽद्य भरतं यद्विशङ्कसे ॥ १४ ॥
न हि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः ।
अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥ १५ ॥
कथं नु पुत्राः पितरं हन्युः कस्यांचिदापदि ।
भ्राता वा भ्रातरं हन्यात् सौमित्रे प्राणमात्मनः ॥ १६ ॥
यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयतां ॥ १७ ॥
उच्यमानो हि भरतो मया लक्ष्मण तत्त्वतः ।
राज्यमस्मै प्रयच्छेति बाढमित्येव वक्ष्यति ॥ १८ ॥

तथोक्तो धर्मशीलेन भ्रात्रा तस्य हिते रतः ।
लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ १९ ॥
तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्युवाच ह ।
त्वां मन्ये द्रष्टुमायातः पिता दशरथः स्वयं ॥ २० ॥
व्रीडितं लक्ष्मणं दृष्ट्वा राघवः प्रत्युवाच ह ।
एष मन्ये महाबाहुरिहास्मान् द्रष्टुमागतः ॥ २१ ॥
अथवा नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ ।
वनवासमनुध्याय गृहाय प्रतिनेष्यति ॥ २२ ॥
इमां चाप्येष वैदेहीमत्यन्तसुखसेविनीं ।
पिता मे राघवः श्रीमान् वनादादाय यास्यति ॥ २३ ॥
एतौ तौ संप्रकाशेते गोत्रवन्तौ मनोरमौ ।
वायुवेगसमौ वीरौ जवनौ तुरगोत्तमौ ॥ २४ ॥
स एष सुमहाकायः कम्पते वाहिनीमुखे ।
नागः शत्रुंजयो नाम वृद्धस्तातस्य धीमतः ॥ २५ ॥
न तु पश्यामि तच्छत्रं पाण्डुरं लोकविश्रुतं ।
पितुर्दिव्यं महाभाग संशयो भवतीह मे ॥ २६ ॥
वृक्षाग्रादवरोह त्वं कुरु लक्ष्मण मद्वचः ।
इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ॥ २७ ॥
अवतीर्य तु सालाग्रात् तस्मात् स समितिंजयः ।
लक्ष्मणः प्राञ्जलिर्भूत्वा तस्थौ रामस्य पार्श्वतः ॥ २८ ॥

भरतेनाथ संदिष्टा संमर्दो मा भवेदिति ।
समन्तात् तस्य शैलस्य सेना वासमकल्पयत् ॥ २९ ॥
अध्यर्द्धमिक्ष्वाकुचमूर्योजनं पर्वतस्य सा ।
पार्श्वे न्यवसदावृत्य गजवाजिनराकुला ॥ ३० ॥
सा चित्रकूटे भरतेन सेना ।
धर्मं पुरस्कृत्य विधूय दर्पं ।
प्रसादनार्थं रघुनन्दनस्य ।
विरोचते नीतिमता प्रणीता ॥ ३१ ॥

इत्ययोध्याकाण्डे लक्ष्मणानुनयो नाम अष्टनवतितमः सर्गः
॥ ९८ ॥

---

## CAPUT XCIX.

### BHARATAE ADVENTUS.

निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् ।
भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ १ ॥
क्षिप्रं वनमिदं सौम्य नरसंघैः समन्ततः ।
लुब्धैश्च सहितैरेभिस्त्वमन्वेषितुमर्हसि ॥ २ ॥

गुह्रो ज्ञातिसहस्रेण शरचापासिपाणिना ।
वने मार्गतु काकुत्स्थावस्मिन् परिवृतः स्वयं ॥ ३ ॥
अमात्यैः सह पौरैश्च गुरुभिश्च द्विजातिभिः ।
सह सर्वं चरिष्यामि पद्भ्यां परिवृतः स्वयं ॥ ४ ॥
यावन्न रामं द्रक्ष्यामि लक्ष्मणं च महाबलं ।
वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति ॥ ५ ॥
यावन्न चन्द्रसंकाशं द्रक्ष्यामि शुभमाननं ।
भ्रातुः पद्मपलाशाक्षं न मे शान्तिर्भविष्यति ॥ ६ ॥
यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ ।
शिरसा प्रग्रहीष्यामि न मे शान्तिर्भविष्यति ॥ ७ ॥
यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः ।
अभिषेकजलक्लिन्नो न मे शान्तिर्भविष्यति ॥ ८ ॥
कृतकृत्या महाभागा वैदेही जनकात्मजा ।
भर्तारं सागरान्तायाः पृथिव्या यानुगच्छति ॥ ९ ॥
सुभगश्चित्रकूटोऽसौ गिरिराजसमो गिरिः ।
यस्मिन् वसति काकुत्स्थः कुवेर इव नन्दने ॥ १० ॥
कृतकार्यमिदं दुर्गं वनं व्यालनिषेवितं ।
यदध्यास्ते महाराजो रामः शस्त्रभृतां वरः ॥ ११ ॥
एवमुक्त्वा महावाहुर्भरतः पुरुषर्षभः ।
पद्भ्यामेव महातेजाः प्रविवेश महद्वनं ॥ १२ ॥

स तानि द्रुमजालानि जातानि गिरिसानुषु ।
पुष्पिताग्राणि मध्येन जगाम वदतां वरः ॥ १३ ॥
स गिरेश्चित्रकूटस्य सानुमासाद्य पुष्पितं ।
रामाश्रमगतस्याग्नेर्ददर्श धजमुच्छ्रितं ॥ १४ ॥
तं दृष्ट्वा भरतः श्रीमान् मुमोद सहबान्धवः ।
अत्र राम इति ज्ञात्वा गतः पारमिवाम्भसः ॥ १५ ॥
स चित्रकूटे तु गिरौ निशम्य ।
रामाश्रमं पुण्यजनोपपन्नं ।
गुहेन सार्द्धं त्वरितो जगाम ।
पुनर्निवेश्यैव चमूं महात्मा ॥ १६ ॥

इत्ययोध्याकाण्डे भरतागमो नाम एकोनशततमः सर्गः
॥ ९९ ॥

## CAPUT C.

### Bharatae congressus cum Rama.

निविष्टायां तु सेनायामुत्सुको भरतस्तदा ।
जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥
ऋषिं वसिष्ठं संदिश्य मातॄर्मे शीघ्रमानय ।
इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥
सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्ववर्तत ।
रामदर्शनजस्तर्षो भरतस्येव तस्य हि ॥ ३ ॥
गच्छन्नेवाथ भरतस्तापसालयसंस्थिताम् ।
भ्रातुः पर्णकुटीं श्रीमान् उटजं च ददर्श ह ॥ ४ ॥
शालायास्त्वग्रतस्तस्या ददर्श भरतस्तदा ।
काष्ठानि चावभग्नानि पुष्पाण्यपचितानि च ॥ ५ ॥
सलक्ष्मणस्य रामस्य ददर्शाश्रममेयुषः ।
कृतं वृक्षेष्वभिज्ञानं कुशचीरैः क्वचित् क्वचित् ॥ ६ ॥
ददर्श च वने तस्मिन् महतः संचयान् कृतान् ।
मृगाणां महिषाणां च करीषैः शीतकारणात् ॥ ७ ॥

गच्छन्नेव महाबाहुर्द्युतिमान् भरतस्तदा ।
शत्रुघ्नं चाब्रवीद्दृष्टस्तान् अमात्यांश्च सर्वशः ॥ ८ ॥
मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ।
नातिदूरे च मन्येऽहं नदीं मन्दाकिनीमितः ॥ ९ ॥
इदं चोदात्तदन्तानां कुञ्जराणां तरस्विनां ।
शैलपार्श्वे परिक्रान्तमन्योन्यमभिगर्जतां ॥ १० ॥
यमेवाधातुमिच्छन्ति तापसाः सततं वने ।
तस्यासौ दृश्यते धूमः संकुलः कृष्णवर्त्मनः ॥ ११ ॥
अत्राहं पुरुषव्याघ्रं गुरुसत्कारकारिणं ।
आर्यं द्रक्ष्यामि संहृष्टो महर्षिमिव राघवं ॥ १२ ॥
अथ गत्वा मुहूर्तं तु चित्रकूटं समन्ततः ।
मन्दाकिनीमनुप्राप्तस्तं जनं वाक्यमब्रवीत् ॥ १३ ॥
जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः ।
जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितं ॥ १४ ॥
मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः ।
सर्वान् कामान् परित्यज्य वने वसति राघवः ॥ १५ ॥
इति लोकसमाक्रुष्टः पादेष्वद्य प्रसादयन् ।
रामस्य निपतिष्यामि सीतायाश्च पुनः पुनः ॥ १६ ॥
एवं स विलपंस्तस्मिन् वने दशरथात्मजः ।
ददर्श महतीं पुण्यां पर्णशालां मनोरमां ॥ १७ ॥

सालतालाश्वकर्णानां पर्णैर्बहुभिरावृतां ।
विशालां मृदुविस्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १८ ॥
शक्रायुधनिकाशैश्च कार्मुकैर्भारसाधनैः ।
रुक्मपृष्ठैर्महासारैः शोभितां शत्रुबाधकैः ॥ १९ ॥
अर्करश्मिप्रतीकाशैर्घोरैस्तूणगतैः शरैः ।
शोभितां दीप्तवदनैः सर्पैर्भोगवतीमिव ॥ २० ॥
महारजतवासोभ्यामसिभ्यां च विराजितां ।
रुक्मविन्दुविचित्राभ्यां चर्मभ्यां चापि शोभितां ॥ २१ ॥
गोधांगुलित्रैरासक्तैश्चित्रैः काञ्चनभूषितैः ।
अरिसंघैरनाधृष्यां मृगैः सिंहगुहामिव ॥ २२ ॥
प्रागुदक्प्रवणां वेदीं विशालां दीप्तपावकां ।
ददर्श भरतस्तत्र पुण्यां रामनिकेतने ॥ २३ ॥
निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुं ।
उटजे राममासीनं जटावल्कलधारिणं ॥ २४ ॥
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणं ।
पृथिव्याः सागरान्ताया भर्तारं धर्मचारिणं ॥ २५ ॥
महात्मानं महाभागं ब्रह्माणमिव शाश्वतं ।
सर्वतोपास्यमानं च सीतया लक्ष्मणेन च ॥ २६ ॥
तं दृष्ट्वा भरतः श्रीमान् दुःखमोहपरिप्लुतः ।
अभ्यधावत धर्मात्मा भ्रातरं कैकयीसुतः ॥ २७ ॥

दृष्ट्वैव विललापार्त्तो वाष्पसंदिग्धया गिरा ।
अशक्नुवन् धारयितुं धैर्यं वचनमब्रवीत् ॥ २८ ॥
यः संसदि प्रकृतिभिर्भवेद्युक्त उपासितुं ।
वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ २९ ॥
वासोभिर्बहुसाहस्रैर्यो महात्मा पुरोचितः ।
मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३० ॥
अधारयद्यो विविधाश्चित्राः सुमनसः सदा ।
सोऽयं जटाभारमिमं सहते राघवः कथं ॥ ३१ ॥
यस्य यज्ञैर्यथादिष्टैर्युक्तो धर्मस्य संचयः ।
शरीरक्लेशसंभूतं स धर्मं परिमार्गते ॥ ३२ ॥
चन्दनेन महार्हेण यस्याङ्गमुपलेपितं ।
मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते ॥ ३३ ॥
मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः ।
धिग्जीवितं नृशंसस्य मम लोकविगर्हितं ॥ ३४ ॥
इत्येवं विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३५ ॥
वाष्पापिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनं ।
आर्येत्येवाभिसंक्रुश्य व्याहर्तुं नाशकत् ततः ॥ ३६ ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ च समालिंग्य रामोऽप्यश्रूण्यवर्तयत् ॥ ३७ ॥

ततः सुमन्त्रेण गुहेन चैव ।
समीयतू राजसुतावरण्ये ।
दिवाकरश्चैव निशाकरश्च ।
यथाम्बरे शुक्रबृहस्पतिभ्यां ॥ ३८ ॥
तान् पार्थिवान् वारणयूथपार्हान् ।
समागतांस्तत्र महत्यरण्ये ।
वनौकसस्तेऽभिसमीक्ष्य सर्वे ।
त्वश्रूण्यमुञ्चन् प्रविहाय हर्षं ॥ ३९ ॥

इत्ययोध्याकाण्डे भरतसमागमो नाम शततमः सर्गः
॥ १०० ॥

---

## CAPUT CI.

### BHARATAS A RAMA INTERROGATUS.

कथंचिदभिविज्ञाय विवर्णवदनं कृशं ।
भ्रातरं भरतं रामः प्रतिजग्राह पाणिना ॥ १ ॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवं ।
अङ्के भरतमारोप्य पर्यपृच्छत सादरं ॥ २ ॥

क्व नु ते ऽभूत् पिता तात यदरण्यं त्वमागतः ।
न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ॥ ३ ॥
यन्निमित्तमिमं देशं कृष्णाजिनजटाधरः ।
हित्वा राज्यं प्रविष्टस्त्वं तत् सर्वं वक्तुमर्हसि ॥ ४ ॥
इत्युक्तः कैकयीपुत्रः काकुत्स्थेन महात्मना ।
प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥
* आर्य तातः परित्यज्य कृत्वा कर्म सुदुष्करं ।
* गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ॥ ६ ॥
स्त्रिया नियुक्तः कैकेय्या मम मात्रा परंतप ।
चकार सुमहत् पापमिदमात्मयशोहरं ॥ ७ ॥
सा राज्यफलमप्राप्य विधवा शोककर्शिता ।
पतिष्यति महाघोरे नरके जननी मम ॥ ८ ॥
तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ।
अभिषिञ्चस्व चाद्यैव राज्येन मघवान् इव ॥ ९ ॥
इमाः प्रकृतयः सर्वा विधवा मातरश्च याः ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥ १० ॥
तदानुपूर्व्या युक्तश्च युक्तं चात्मनि मानद ।
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥ ११ ॥
भवत्वविधवा भूमिः समग्रा पतिना त्वया ।
शशिना विमलेनेव शारदी रजनी यथा ॥ १२ ॥

एभिश्च सचिवैः सार्द्धं शिरसा याचितो मया ।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्त्तुमर्हसि ॥ १३ ॥
तदिदं शाश्वतं पित्र्यं सर्व्वं सचिवमण्डलं ।
पूजितं पुरुषव्याघ्र नातिक्रमितुमर्हसि ॥ १४ ॥
एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः ।
रामस्य शिरसा पादौ जग्राह भरतः पुनः ॥ १५ ॥
तं मत्तमिव मातङ्गं निःश्वसन्तं मुहुर्मुहुः ।
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ १६ ॥
कुलीनः सत्वसंपन्नस्तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं पापमाचरेन्मद्विधो जनः ॥ १७ ॥
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ।
न चापि जननीं बाल्यात् त्वं विगर्हितुमर्हसि ॥ १८ ॥
कामकारो महाप्राज्ञ गुरूणां सर्व्वदानघ ।
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १९ ॥
वयमस्य यथा लोके संख्याताः सौम्य साधुभिः ।
भार्याः पुत्राश्च शिष्याश्च त्वमपि ज्ञातुमर्हसि ॥ २० ॥
वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरं ।
राज्ये वापि महाराजो मां वासयितुमीश्वरः ॥ २१ ॥
यावत् पितरि धर्म्मज्ञ गौरवं लोकसत्कृते ।
तावद्धर्म्मकृतां श्रेष्ठ जनन्यामपि गौरवं ॥ २२ ॥

एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ।
मातापितृभ्यामुक्तोऽहं कथमन्यत् समाचरे ॥ २३ ॥
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतं ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २४ ॥
एवं कृत्वा महाभागो विभागं लोकसंनिधौ ।
व्यादिश्य च महाराजो दिवं दशरथो गतः ॥ २५ ॥
स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ।
पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २६ ॥
चतुर्दश समाः सौम्य दण्डकारण्यमाश्रितः ।
उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना ॥ २७ ॥
यदब्रवीन्मां नरलोकसत्कृतः ।
पिता महात्मा विबुधाधिपोपमः ।
तदेव मन्ये परमात्मनो हितं ।
न सर्वलोकेश्वरभावमव्ययं ॥ २८ ॥

इत्ययोध्याकाण्डे रामप्रश्नो नाम एकाधिकशततमः सर्गः
॥ १०१ ॥

## CAPUT CII.

### Nuntius de patris morte acceptus.

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ १ ॥
शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु नरर्षभ ।
ज्येष्ठे पुत्रे स्थिते राज्ञां न कनीयान् भवेन्नृपः ॥ २ ॥
स समृद्धां मया सार्द्धमयोध्यां गच्छ राघव ।
अभिषेचय चात्मानं कुलस्यास्य भवाय नः ॥ ३ ॥
राजानं मानुषं प्राहुर्देवत्वे संमतो मम ।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषं ॥ ४ ॥
केकयस्थे तु च मयि त्वयि चारण्यमाश्रिते ।
दिवमार्यो गतो राजा यायजूकः सतां मतः ॥ ५ ॥
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे ।
पुत्रशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ॥ ६ ॥
उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥
प्रियेण किल दत्तं हि पितृलोकेषु राघव ।
अक्षयं भवतीत्याहुर्भवांश्चैव पितुः प्रियः ॥ ८ ॥

त्वामेव शोचंस्तव दर्शनेप्सुस् ।
त्वय्येव सक्तामनिवर्त्य बुद्धिं ।
त्वया विहीनस्तव शोकरुग्नस् ।
त्वां संस्मरन्नस्तमितः पिता ते ॥ ९ ॥

इत्ययोध्याकाण्डे पितृमरणश्रवणं नाम द्व्यधिकशततमः सर्गः ॥ १०२ ॥

---

## CAPUT CIII.

### LIBATIO MANIBUS FACTA.

तां श्रुत्वा करुणां वाचं पितुर्मरणसंहितां ।
राघवो भरतेनोक्तां बभूव गतचेतनः ॥ १ ॥
तं तु वज्रमिवोत्सृष्टमाहवे दानवारिणा ।
वाग्वज्रं भरतेनोक्तममंस्त स परंतपः ॥ २ ॥
प्रगृह्य रामो बाहू वै पुष्पिताग्रो यथा द्रुमः ।
वने परशुना कृत्तस्तथा भुवि पपात ह ॥ ३ ॥
तथा हि पतितं रामं जगत्यां जगतीपतिं ।
कूलपातपरिश्रान्तं प्रसुप्तमिव कुञ्जरं ॥ ४ ॥

भ्रातरस्ते महेष्वासं सर्वतः शोककर्शिताः ।
रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥
स तु संज्ञां पुनर्लब्ध्वा नेत्राभ्यामश्रुमुत्सृजन् ।
उपाक्रमत काकुत्स्थः कृपणं बहु भाषितुं ॥ ६ ॥
स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिं ।
उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितं ॥ ७ ॥
किं करिष्याम्ययोध्यायां ताते दिष्टां गतिं गते ।
कस्तां राजवराद्धीनामयोध्यां पालयिष्यति ॥ ८ ॥
किं नु तस्य मया कार्यं दुर्जातेन महात्मनः ।
यो मृतो मम शोकेन मया चापि न संस्कृतः ॥ ९ ॥
अहो भरत सिद्धार्थो येन राजा त्वयानघ ।
शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु सत्कृतः ॥ १० ॥
निष्प्रधानामनेकाग्रां नरेन्द्रेण विनाकृतां ।
निवृत्तवनवासोऽपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥
समाप्तवनवासं मामयोध्यायां परंतप ।
कोऽनुशासिष्यति पुनस्ताते लोकान्तरं गते ॥ १२ ॥
पुरा प्रेक्ष्य सुवृत्तं मां पिता यान्याह शान्त्वयन् ।
वाक्यानि तानि श्रोष्यामि कुतः कर्णसुखान्यहं ॥ १३ ॥
एवमुक्त्वा तु भरतं भार्यामभ्येत्य राघवः ।
उवाच शोकसंतप्तः पूर्णचन्द्रनिभाननां ॥ १४ ॥

सीते मृतस्ते श्वशुरः पितृहीनोऽसि लक्ष्मण ।
भरतो दुःखमाचष्टे स्वर्गतिं पृथिवीपतेः ॥ १५ ॥
ततो बहुगुणं तेषां वाष्पं नेत्रेष्वजायत ।
तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनां ॥ १६ ॥
ततस्ते भ्रातरः सर्वे भृशमाश्वास्य दुःखितं ।
अब्रुवन् जगतीभर्तुः क्रियतामुदकं पितुः ॥ १७ ॥
सा सीता स्वर्गतं श्रुत्वा श्वशुरं तं महानृपं ।
नेत्राभ्यामश्रुपूर्णाभ्यां न शशाकेक्षितुं प्रियं ॥ १८ ॥
शान्त्वयित्वा तु तां रामो रुदन्तीं जनकात्मजां ।
उवाच लक्ष्मणं तत्र दुःखितो दुःखितं वचः ॥ १९ ॥
आनयेंगुदिपिण्याकं चीरमाहर चोत्तरं ।
जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥ २० ॥
सीता पुरस्ताद्व्रजतु त्वमेनामभितो व्रज ।
अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥ २१ ॥
ततो नित्यानुगस्तेषां विदितात्मा महामतिः ।
मृदुर्दान्तश्च शान्तश्च रामे च दृढभक्तिमान् ॥ २२ ॥
सुमन्त्रस्तैर्नृपसुतैः सार्द्धमाश्वास्य राघवं ।
अवतारयदालम्ब्य नदीं मन्दाकिनीं शिवां ॥ २३ ॥
ते सुतीर्थां ततः कृच्छ्रादुपागम्य यशस्विनः ।
नदीं मन्दाकिनीं रम्यां सदापुष्पितकाननां ॥ २४ ॥

शीघ्रस्रोतसमासाद्य तीर्थं शिवमकर्दमं ।
सिषिचुस्तूदकं राज्ञे तात एतद्भवत्विति ॥ २५ ॥
प्रगृह्य च महीपालो जलपूरितमञ्जलिं ।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत् ॥ २६ ॥
एतत् ते राजशार्दूल विमलं तोयमक्षयं ।
पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥ २७ ॥
ततो मन्दाकिनीतीरं प्रत्युत्तीर्य स राघवः ।
पितुश्चकार तेजस्वी निर्वापं भ्रातृभिः सह ॥ २८ ॥
ऐंगुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्त्तो रुदन् वचनमब्रवीत् ॥ २९ ॥
इदं भुंक्ष्व महाराज प्रीतो यदशना वयं ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥
ततस्तेनैव मार्गेण प्रत्युत्तीर्य नदीतटात् ।
आरुरोह नरव्याघ्रो रम्यसानुं महीधरं ॥ ३१ ॥
ततः पर्णकुटीद्वारमासाद्य जगतीपतिः ।
परिजग्राह पाणिभ्यामुभौ भरतलक्ष्मणौ ॥ ३२ ॥
तेषां तु रुदतां शब्दात् प्रतिशब्दोऽभवद्गिरौ ।
भ्रातॄणां सह वैदेह्या सिंहानां नर्दतामिव ॥ ३३ ॥
महाबलानां रुदतां कुर्वतामुदकं पितुः ।
विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥

अब्रुवंश्चापि रामेण भरतः संगतो ध्रुवं ।
तेषामेव महान् शब्दः शोचतां पितरं मृतं ॥ ३५ ॥
अथ वाहान् परित्यज्य तं सर्वे प्रमुखाः स्वनं ।
अप्येकमनसो जग्मुर्यथास्थानं प्रधाविताः ॥ ३६ ॥
हयैरन्ये गजैरन्ये रथैरन्ये स्वलंकृतैः ।
सुकुमारास्तथैवान्ये पद्भिरेव नरा ययुः ॥ ३७ ॥
अचिरप्रोषितं रामं चिरविप्रोषितं यथा ।
द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमं ॥ ३८ ॥
सा भूमिर्बहुभिर्यानैः खुरनेमिसमाहता ।
मुमोच तुमुलं शब्दं द्यौरिवाभ्रसमागमे ॥ ३९ ॥
तेन वित्रासिता नागाः करेणुपरिवारिताः ।
आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः ॥ ४० ॥
वराहमृगसिंहाश्च महिषाः सृमरास्तथा ।
व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥ ४१ ॥
रथाङ्गाह्वाः सदात्यूहा हंसाः कारण्डवाः प्लवाः ।
तथा पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः ॥ ४२ ॥
तेन शब्देन वित्रस्तैराकाशं पक्षिभिर्वृतं ।
मनुष्यैरावृता भूमिरुभयं प्रबभौ तदा ॥ ४३ ॥
ततस्तं पुरुषव्याघ्रं यशस्विनमकल्मषं ।
आसीनं स्थण्डिले रामं ददर्श सहसा जनः ॥ ४४ ॥

विगर्हमाणः कैकेयीं मन्थरासहितामपि ।
अभिगम्य जनो रामं बाष्पपूर्णमुखोऽभवत् ॥ ४५ ॥
तान् नरान् बाष्पपूर्णाक्षान् समीक्ष्याथ सुदुःखितान् ।
पर्यस्वजत धर्मज्ञः पितृवन्मातृवच्च सः ॥ ४६ ॥
स तत्र कांश्चित् परिषस्वजे नरान् ।
नराश्च केचित् तु तमभ्यवादयन् ।
चकार सर्वान् स वयस्यबान्धवान् ।
यथार्हमासाद्य तदा नृपात्मजः ॥ ४७ ॥
ततः स तेषां रुदतां महात्मनां ।
भुवं च खं चानुविनादयन् स्वनः ।
गुहा गिरीणां च दिशश्च संततं ।
मृदङ्गघोषप्रतिमो विशुश्रुवे ॥ ४८ ॥

इत्ययोध्याकाण्डे उदयक्रिया नाम त्र्यधिकशततमः सर्गः
॥ १०३ ॥

## CAPUT CIV.

### CONGRESSUS CUM MATRIBUS.

वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च ।
अभिचक्राम तं देशं रामदर्शनतर्षितः ॥ १ ॥
राजपत्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति ।
ददृशुस्तत्र तत् तीर्थं रामलक्ष्मणसेवितं ॥ २ ॥
कौशल्या वाष्पपूर्णेन मुखेन परिशुष्यता ।
सुमित्रामब्रवीद्दीना याश्चान्या राजयोषितः ॥ ३ ॥
इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणां ।
वनं प्राक् केवलं तीर्थमेतं निर्विषयीकृताः ॥ ४ ॥
इतः सुमित्रे पुत्रस्ते सदा जलमतन्द्रितः ।
स्वयं हरति सौमित्रिर्मम पुत्रस्य कारणात् ॥ ५ ॥
अज्यायमपि ते पुत्रः क्लेशानामतथोचितः ।
नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ॥ ६ ॥
दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले ।
पितुरिंगुदिपिण्याकं न्यस्तमायतलोचना ॥ ७ ॥
तं भूमौ पितुरार्त्तेन न्यस्तं रामेण वीक्ष्य सा ।
उवाच देवी कौशल्या सर्वा दशरथस्त्रियः ॥ ८ ॥
इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः ।
राघवेण पितुर्दत्तं पश्यतैतद्यथाविधि ॥ ९ ॥

तस्य देवसमानस्य पार्थिवस्य महात्मनः ।
नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनं ॥ १० ॥
चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो भुवि ।
कथमिंगुदिपिण्याकं स भुंक्ते वसुधाधिपः ॥ ११ ॥
अतो दुःखतरं लोके न किंचित् प्रतिभाति मे ।
यत्र रामः पितुर्दद्यादिंगुदिक्षोदमृद्धिमान् ॥ १२ ॥
श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति मे ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ १३ ॥
एवमार्त्ता सपत्न्यस्तु जग्मुराश्वास्य तां तदा ।
ददृशुश्चाश्रमे रामं स्वर्गाच्च्युतमिवामरं ॥ १४ ॥
सर्वभोगैः परित्यक्तं रामं संप्रेक्ष्य मातरः ।
आर्त्ता मुमुचुरश्रूणि सस्वरं शोककर्शिताः ॥ १५ ॥
तासां रामः समुत्थाय जग्राह चरणाम्बुजान् ।
मातॄणां मनुजव्याघ्रः सर्वासां सत्यसंगरः ॥ १६ ॥
ताः पाणिभिः सुखस्पर्शैर्मृद्वंगुलितलैः शुभैः ।
प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः ॥ १७ ॥
सौमित्रिरपि ताः सर्वा मातॄः संप्रेक्ष्य दुःखिताः ।
अभ्यवादयदासक्तं शनै रामादनन्तरं ॥ १८ ॥
यथा रामे तथा तस्मिन् सर्वा ववृत्तिरे स्त्रियः ।
वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥ १९ ॥

सीतापि चरणांस्तासामुपगृह्य सुदुःखिता ।
श्वश्रूणामश्रुपूर्णाक्षी संबभूवाग्रतः स्थिता ॥ २० ॥
तां परिष्वज्य दुःखार्त्ता माता दुहितरं यथा ।
वनवासकृशां दीनां कौशल्या वाक्यमब्रवीत् ॥ २१ ॥
विदेहराजस्य सुता स्नुषा दशरथस्य च ।
रामपत्नी कथं दुःखं संप्राप्ता निर्जने वने ॥ २२ ॥
पद्ममातपसंतप्तं परिक्लिष्टमिवोत्पलं ।
काञ्चनं रजसा ध्वस्तं दिवा चन्द्रमिवाप्रभं ॥ २३ ॥
मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयं ।
भृशं मनसि वैदेहि व्यसनारणिसंभवः ॥ २४ ॥
ब्रुवन्त्यामेवमार्त्तायां जनन्यां भरताग्रजः ।
पादावासाद्य जग्राह वशिष्ठस्य स राघवः ॥ २५ ॥
पुरोहितस्याग्निसमस्य तस्य वै ।
बृहस्पतेरिन्द्र इवामराधिपः ।
प्रगृह्य पादौ सुसमृद्धतेजसः ।
सहैव तेनोपविवेश राघवः ॥ २६ ॥
ततो जघन्यैः सहितः स मन्त्रिभिः ।
पुरप्रधानैश्च तथैव सैनिकैः ।
जनेन धर्मज्ञतमेन धर्मवान् ।
उपोपविष्टो भरतस्तदाग्रजं ॥ २७ ॥

उपोपविष्टस्तु तदा स वीर्यवान् ।
तपस्विवेशेन समीक्ष्य राघवं ।
श्रिया ज्वलन्तं भरतः कृताञ्जलिर् ।
यथा महेन्द्रः प्रयतः प्रजापतिं ॥ २८ ॥
किमेष वाक्यं भरतोऽद्य राघवं ।
प्रणम्य सत्कृत्य च साधु वक्ष्यति ।
इतीव तस्यार्यजनस्य सर्वतो ।
बभूव कौतूहलमुत्तमं तदा ॥ २९ ॥
स राघवः सत्यधृतिश्च लक्ष्मणो ।
महानुभावो भरतश्च धार्मिकः ।
वृताः सुहृद्भिस्तु विरेजुरध्वरे ।
यथा सदस्यैः सहितास्त्रयोऽग्नयः ॥ ३० ॥

इत्ययोध्याकाण्डे मातृसमागमो नाम चतुरधिकशततमः सर्गः ॥ १०४ ॥

## CAPUT CV.

### RAMAE SERMO.

तूष्णीं ते समुपासीना न शक्ता भाषणे तदा ।
भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ १ ॥
शान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुंक्ष्व राज्यमकण्टकं ॥ २ ॥
महतेवाम्बुवेगेन भिन्नः सेतुर्जलागमे ।
दुरावारं त्वदन्येन राज्यखण्डमिदं महत् ॥ ३ ॥
गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः ।
अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥ ४ ॥
सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते ।
राम तस्य तु दुर्जीवं यः परान् उपजीवति ॥ ५ ॥
यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः ।
ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥ ६ ॥
स यदा पुष्पितो भूत्वा फलानि न विदर्शयेत् ।
सतां नानुभवेत् प्रीतिं यस्य हेतोः प्रभावितः ॥ ७ ॥
एषोपमा महाबाहो तदर्थं वेत्तुमर्हसि ।
यत्र त्वमस्मान् वृषभो भृत्यान् भर्ता न शाधि हि ॥ ८ ॥

श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्तमिवादित्यं राज्ये स्थितमरिंदमं ॥ ९ ॥
तवानुयाने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः ।
अन्तःपुरचरा नार्यो नन्दन्तु सुसमाहिताः ॥ १० ॥
तस्य साध्वनुमन्यन्त नागरा विविधा जनाः ।
भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥ ११ ॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनं ।
रामः कृतात्मा भरतं समाश्वासयदात्मवान् ॥ १२ ॥
नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ १३ ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितं ॥ १४ ॥
यथा फलानां पक्वानां नान्यत्र पतनाद्भयं ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयं ॥ १५ ॥
यथागारं दृढस्थूणं जीर्णं भूत्वावसीदति ।
तथावसीदन्ति नरा जरामृत्युवशं गताः ॥ १६ ॥
अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकार्णवं ॥ १७ ॥
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ १८ ॥

आत्मानमनुशोचस्व किमन्यमनुशोचसि ।
आयुस्ते क्षीयते यस्य स्थितस्य च गतस्य च ॥ १९ ॥
सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥ २० ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ २१ ॥
नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते ऽपि च ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयं ॥ २२ ॥
हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिवागतं ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ २३ ॥
यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य च व्यपेयातां कालमासाद्य कंचन ॥ २४ ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २५ ॥
नात्र कश्चिद्यथाभावं प्राणी समभिवर्तते ।
तेन तस्मिन्नसामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ २६ ॥
यथा हि सार्थं गच्छन्तं ब्रूयात् कश्चित् पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ २७ ॥
एवं पूर्वैर्गतो मार्गः पितृपैतामहैर्ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ २८ ॥

वयसः पतमानस्य स्रोतसो वानिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥ २९ ॥
भृत्यानां भरणात् सम्यक् प्रजानां परिपालनात् ।
अर्थदानाच्च धर्मेण पिता नस्त्रिदिवं गतः ॥ ३० ॥
कर्मभिः सुशुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः ।
स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः ॥ ३१ ॥
उत्तमं चायुरासाद्य भोगमपि च पुष्कलं ।
स न शोच्यः पिता तात स्वर्गतः संमतः सतां ॥ ३२ ॥
स जीर्णं मानुषं देहं परित्यज्य पिता हि नः ।
दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीं ॥ ३३ ॥
तत्र नैवंविधः कश्चित् प्राज्ञः शोचितुमर्हति ।
त्वद्विधो मद्विधश्चापि श्रुतिमान् बुद्धिमत्तरः ॥ ३४ ॥
एते बहुविधाः शोका विलापरुदितास्तथा ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३५ ॥
स स्वस्थो भव मा शोच यात्वा चावस तां पुरीं ।
यथा पित्रा नियुक्तोऽसि तथा कुरु नरर्षभ ॥ ३६ ॥
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा ।
तत्रैवाहं करिष्यामि पितुरार्यस्य शासनं ॥ ३७ ॥
तद्वचः पितुरेवाहं संमतं धर्मचारिणां ।
कर्मणा पालयिष्यामि वनवासेन राघव ॥ ३८ ॥

इत्येवमुक्त्वा वचनं महात्मा ।
पितुर्निदेशप्रतिपालनार्थं ।
यवीयसं भ्रातरमर्थयुक्तं ।
प्रभुर्मुहूर्ताद्विरराम रामः ॥ ३१ ॥

इत्ययोध्याकाण्डे रामवाक्यं नाम पञ्चाधिकशततमः सर्गः
॥ १०५ ॥

---

## CAPUT CVI.

### BHARATAE SERMO.

ततो मन्दाकिनीतीरे रामं प्रकृतिसंसदि ।
उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः ॥ १ ॥
को हि स्यादीदृशो लोके यादृशस्त्वमरिंदम ।
न त्वां प्रव्यथयेद्दुःखं प्रीतिर्वा न प्रहर्षयेत् ॥ २ ॥
संमतश्चासि वृद्धानां तांश्च पृच्छसि संशयान् ।
यथा मृतस्तथा जीवन् यथासति तथा सति ॥ ३ ॥
यस्यैष बुद्धिलाभः स्याद्यथा ते मनुजाधिप ।
स एव व्यसनं प्राप्य न विषीदितुमर्हति ॥ ४ ॥

अपरोपमसत्त्वस्त्वं महात्मा सत्यसंगरः ।
सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चापि राघव ॥ ५ ॥
न त्वामेवं गुणैर्युक्तं प्रभवाभवकोविदं ।
अविषह्यतमं दुःखमासादयितुमर्हति ॥ ६ ॥
प्रोषिते मयि यत् पापं मात्रा मत्कारणात् कृतं ।
क्षुद्रया तदनिष्टं मे प्रसीदतु भवान् मम ॥ ७ ॥
धर्मबन्धेन बद्धोऽस्मि तेनेमां नेह मातरं ।
हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीं ॥ ८ ॥
कथं दशरथाज्जातः शुद्धाभिजनकर्मणः ।
जानन् धर्ममधर्मं च कुर्यां कर्म जुगुप्सितं ॥ ९ ॥
गुरुः क्रियावान् वृद्धश्च राजा प्रेतः पितेति च ।
तातं न परिगर्हेऽहं दैवतं चेति संसदि ॥ १० ॥
को हि धर्मार्थयोर्हीनमीदृशं कर्म किल्बिषं ।
स्त्रियाः प्रियचिकीर्षुः सन् कुर्याद्धर्मज्ञ धर्मवित् ॥ ११ ॥
अन्तकाले हि भूतानि मुह्यन्तीति पुरा श्रुतिः ।
राज्ञैवं कुर्वता लोके प्रत्यक्षा सा श्रुतिः कृता ॥ १२ ॥
साध्वर्थमभिसंधाय क्रोधान्मोहाच्च साहसात् ।
तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥ १३ ॥
पितुर्हि समतिक्रान्तं यः साधु कुरुते सुतः ।
तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १४ ॥

तदपत्यं भवान् अस्तु मेदं त्वं दुष्कृतं पितुः ।
अनुवर्तस्व काकुत्स्थ लोके साधुविगर्हितं ॥ १५ ॥
कैकेयीं मां च तातं च सुहृदो बान्धवांश्च नः ।
पौरजानपदान् भृत्यांस्त्रातु सर्वमिदं भवान् ॥ १६ ॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनं ।
ईदृशं व्याहतं कर्म न भवान् कर्तुमर्हति ॥ १७ ॥
एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनं ।
येन शक्यं महाप्राज्ञ प्रजानां परिपालनं ॥ १८ ॥
कश्च प्रत्यक्षमुत्सृज्य संशयस्थमलक्षणं ।
आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितं ॥ १९ ॥
अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि ।
धर्मेण चतुरो वर्णान् पालयन् क्लेशमाप्नुहि ॥ २० ॥
चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमं ।
आहुर्धर्मज्ञ धर्मज्ञास्तं कथं त्यक्तुमर्हसि ॥ २१ ॥
श्रुतेन बालस्थानेन जन्मना चावरो ह्यहं ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥ २२ ॥
इदं निखिलमव्यग्रं राज्यं पित्र्यमकण्टकं ।
अनुशाधि स्वधर्मेण धर्मज्ञ सह बान्धवैः ॥ २३ ॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयः सह ।
ऋत्विजः सवशिष्ठाश्च मन्त्रवन्मन्त्रकोविदाः ॥ २४ ॥

अभिषिक्तस्त्वमस्माभिरयोध्यां पालने व्रज ।
विजित्य तरसा लोकान् मरुद्भिरिव वासवः ॥ २५ ॥
ऋणानि त्रीण्यपाकुर्वन् दुर्हृदः साधु निर्दहन् ।
सुहृदस्तर्पयन् कामैर्वसंस्तत्रानुशाधि नः ॥ २६ ॥
अद्यार्य मुदिताः सन्तु सुहृदस्ते ऽभिषेचनात् ।
अद्य भीताः पलायन्तामरयस्ते दिशो दश ॥ २७ ॥
आक्रोशं मम मातुश्च प्रमार्ज्य पुरुषर्षभ ।
अद्य तत्र भवन्तं च पितरं रक्ष किल्बिषात् ॥ २८ ॥
शिरसा त्वाभियाचे ऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ २९ ॥
अथवा पृष्ठतः कृत्वा वनमेव भवान् इतः ।
गमिष्यति गमिष्यामि भवता सार्द्धमप्यहं ॥ ३० ॥

तथा हि रामो भरतेन ताम्यता ।
प्रसाद्यमानः शिरसा महीपतिः ।
न चैव चक्रे गमनाय सत्त्ववान् ।
मतिं पितुस्तद्वचने प्रतिष्ठितः ॥ ३१ ॥
तदद्भुतं स्थैर्यमवेक्ष्य राघवे ।
समं जनो हर्षमवाप दुःखितः ।
न यात्ययोध्यामिति दुःखितो ऽभवत् ।
स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः ॥ ३२ ॥

तमृत्विजो नैगमयूथवल्लभाम्- ।
तथा विसंज्ञाश्रुकलाश्च मातरः ।
तथा ब्रुवाणं भरतं प्रतुष्टुवुः ।
प्रणम्य रामं च ययाचिरे सह ॥ ३२ ॥

इत्ययोध्याकाण्डे भरतवाक्यं नाम षडधिकशततमः सर्गः
॥ १०६ ॥

---

## CAPUT CVII.

### RAMAE SERMO.

पुनरेवं ब्रुवाणं तु भरतं लक्ष्मणाग्रजः ।
प्रत्युवाच ततः श्रीमान् ज्ञातिमध्ये सुसत्कृतं ॥ १ ॥
उपपन्नमिदं वाक्यं यस्त्वमेवमभाषथाः ।
जातः पुत्रो दशरथात् कैकेय्यां राजसत्तमात् ॥ २ ॥
पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् ।
मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमं ॥ ३ ॥
देवासुरे च संग्रामे जनन्यै तव पार्थिव ।
संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥

ततः सा संप्रतिश्राव्य तव माता यशस्विनी ।
अयाचत नरश्रेष्ठं द्वौ वरौ वरवर्णिनी ॥ ५ ॥
तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा ।
तच्च राजा तथा तस्यै नियुक्तः प्रददौ स्वयं ॥ ६ ॥
तेन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ ।
चतुर्दश वने वासं वर्षाणि वरदानिकं ॥ ७ ॥
सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः ।
सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः ॥ ८ ॥
भवान् अपि तथेत्येव पितरं सत्यवादिनं ।
कर्त्तुमर्हति राजेन्द्र क्षिप्रमेवाभिषेचनात् ॥ ९ ॥
ऋणान्मोचय राजानं मत्कृते भरत प्रभुं ।
पितरं त्राहि धर्मज्ञ मातरं चाभिनन्दय ॥ १० ॥
श्रूयते हि पुरा तात श्रुतिर्गीता यशस्विना ।
गयेन यजमानेन गयेष्वेव पितॄन् प्रति ॥ ११ ॥
पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः पितॄन् यः पाति सर्वतः ॥ १२ ॥
एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः ।
तेषां वै समवेतानां यदि कश्चिद्गयां व्रजेत् ॥ १३ ॥
एवं राजर्षयः सर्वे प्रतीता रघुनन्दन ।
तस्मात् त्राहि नरश्रेष्ठ पितरं नरकात् प्रभो ॥ १४ ॥

अयोध्यां गच्छ भरत प्रकृतीरनुरञ्जय ।
शत्रुघ्नसहितो वीर सह सर्वैर्द्विजातिभिः ॥ १५ ॥
प्रवेक्ष्ये दण्डकारण्यमहमप्यविलम्बयन् ।
आभ्यां तु सहितो राजन् वैदेह्या लक्ष्मणेन च ॥ १६ ॥

त्वं राजा भव भरत स्वयं नराणां ।
वन्यानामहमपि राजराण्मृगाणां ।
गच्छ त्वं पुरवरमद्य संप्रहृष्टः ।
संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ॥ १७ ॥
छायां ते दिनकरभाः प्रबाधमानं ।
वर्षत्रं भरत करोतु मूर्ध्नि शीतां ।
एतेषामहमपि काननद्रुमाणां ।
छायां तामतिशयनीं शनैः श्रयिष्ये ॥ १८ ॥
शत्रुघ्नः कुशलमतिस्तु ते सहायः ।
सौमित्रिर्मम विदितः प्रधानमित्रं ।
चत्वारस्तनयवरा वयं नरेन्द्रं ।
सत्यस्थं भरत चराम मा विषीद ॥ १९ ॥

इत्ययोध्याकाण्डे रामवाक्यं नाम सप्ताधिकशततमः सर्गः
॥ १०७ ॥

## CAPUT CVIII.

### Javalis sermo.

आश्वासयन्तं भरतं जावालिर्ब्राह्मणोत्तमः ।
उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ १ ॥
साधु राघव मा भूत् ते बुद्धिरेवं निरर्थका ।
प्राकृतस्य नरस्येव आर्यबुद्धेर्मनस्विनः ॥ २ ॥
कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् ।
यदेको जायते जन्तुरेक एव विनश्यति ॥ ३ ॥
तस्मान्माता पिता चेति राम सज्जेत यो नरः ।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥ ४ ॥
यथा ग्रामान्तरं गच्छन् नरः कश्चित् क्वचिद्वसेत् ।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५ ॥
एवमेव मनुष्याणां पिता माता गृहं वसु ।
आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ६ ॥
पित्र्यं राज्यं परित्यज्य स नार्हसि नरोत्तम ।
आस्थातुं कापथं दुःखं विषमं बहुकण्टकं ॥ ७ ॥

समृद्धायामयोध्यायामात्मानमभिषेचय ।
एकवेणीधरा हि त्वां नगरी संप्रतीक्षते ॥ ८ ॥
राजभोगान् अनुभवन् महार्हान् पार्थिवात्मज ।
विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥ ९ ॥
न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन ।
अन्यो राजा त्वमप्यन्यस्तस्मात् कुरु यदुच्यते ॥ १० ॥
बीजमात्रं पिता जन्तोः शुक्रं शोणितमेव च ।
संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ॥ ११ ॥
गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै ।
प्रवृत्तिरेषा भूतानां त्वं तु मिथ्या विहन्यसे ॥ १२ ॥
अथ धर्मपरा ये ये तांस्तान् शोचामि नेतरान् ।
ते हि दुःखमिह प्राप्य विनाशं प्रेत्य भेजिरे ॥ १३ ॥
अष्टका पितृदैवत्यमित्ययं प्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १४ ॥
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात् प्रवसतः श्राद्धं न तत् पथ्यशनं भवेत् ॥ १५ ॥
दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ।
यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ १६ ॥
स नास्ति परमित्येवं कुरु बुद्धिं महामते ।
प्रत्यक्षं यत् तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १७ ॥

स तां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शनीं ।
राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥

इत्ययोध्याकाण्डे जावालिवाक्यं नाम अष्टाधिकशततमः
सर्गः ॥ १०८ ॥

---

## CAPUT CIX.

### FIDEI LAUDES.

जावालेस्तु वचः श्रुत्वा रामः सत्यात्मनां वरः ।
उवाच परया सूक्तया बुद्ध्या विप्रतिपन्नया ॥ १ ॥
भवान् मे प्रियकामार्थं वचनं यदिहोक्तवान् ।
अकार्यं कार्यसंकाशमपथ्यं पथ्यसंमितं ॥ २ ॥
निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३ ॥
कुलीनमकुलीनं वा वीरं पुरुषमानिनं ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिं ॥ ४ ॥
अनार्यस्त्वार्यसंस्थानः शौचाद्धीनस्तथा शुचिः ।
लक्षण्यवदलक्षण्यो दुःशीलः शीलवान् इव ॥ ५ ॥

अधर्मं धर्मवेशेन यद्यहं लोकसंकरं ।
अभिपत्स्ये शुभं हित्वा क्रियाविधिविपर्ययं ॥ ६ ॥
कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः ।
बहु मन्येत मां लोके दुर्वृत्तं लोकदूषणं ॥ ७ ॥
कस्य यास्याम्यहं वृत्तं केन वा स्वर्गमाप्नुयां ।
अनया वर्तमानोऽहं वृत्त्या हीनप्रतिज्ञया ॥ ८ ॥
कामवृत्तोऽन्वयं लोकः कृत्स्नः समुपवर्तते ।
यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥ ९ ॥
सत्यमेवानृशंसं च राजवृत्तं सनातनं ।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥
ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ।
सत्यवादी हि लोकेऽस्मिन् परमं गच्छति क्षयं ॥ ११ ॥
उद्विजन्ते यथा सर्पान्नरादनृतवादिनः ।
धर्मः सत्यपरो लोके मूलं सर्वस्य चोच्यते ॥ १२ ॥
सत्यमेवेश्वरो लोके सत्ये श्रीर्नियतं स्थिता ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदं ॥ १३ ॥
दत्तमिष्टं हुतं चैव व्रतानि च तपांसि च ।
वेदाः सत्यप्रतिष्ठानास्तस्मात् सत्यपरो भवेत् ॥ १४ ॥
एकः पालयते लोकमेकः पालयते कुलं ।
मज्जत्येको हि निरये एकः स्वर्गे महीयते ॥ १५ ॥

सोऽहं पितुर्निदेशं तु किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यं सत्येन समयीकृतः ॥ १६ ॥
नैव लोभान्न मोहाद्वा न चाज्ञानात् तमोऽन्वितः ।
सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ १७ ॥
असत्यसंधस्य सतश्च चलस्यास्थिरचेतसः ।
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतं ॥ १८ ॥
प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं ध्रुवं ।
भारः सत्पुरुषाचीर्णस्तदर्थमभिनन्द्यते ॥ १९ ॥
क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितं ।
क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २० ॥
कायेन कुरुते पापं मनसा संप्रधार्य तत् ।
अनृतं जिह्वया चाह त्रिविधं कर्म पातकं ॥ २१ ॥
भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
सत्यं समनुवर्तन्ते सत्यमेव भजेत् ततः ॥ २२ ॥
श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवान् अवधार्य मां ।
आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्व ह ॥ २३ ॥
कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरोः ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसंनिधौ ।
प्रहृष्टमानसा देवी कैकेयी चाभवत् तदा ॥ २५ ॥

वनवासं वसन्नेव शुचिर्नियतभोजनः ।
मूलपुष्पफलैः पुण्यैः पितृन् देवांश्च तर्पयन् ॥ २६ ॥
संतुष्टपञ्चवर्गोऽहं लोकयात्रां प्रवर्तये ।
अकुहः श्रद्दधानः सन् कार्याकार्यविचक्षणः ॥ २७ ॥
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभं ।
अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ २८ ॥
शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः ।
तपांस्युग्राणि चास्थाय दिवं याता महर्षयः ॥ २९ ॥
* अमृष्यमाणः पुनरुग्रतेजा ।
निशम्य तं नास्तिकवाक्यहेतुं ।
* अथाब्रवीत् तं नृपतेस्तनूजो ।
विगर्हमाणो वचनानि तस्य ॥ ३० ॥
* सत्यं च धर्मं च पराक्रमं च ।
भूतानुकम्पं प्रियवादितां च ।
* द्विजातिदेवातिथिपूजनं च ।
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३१ ॥
* निन्दाम्यहं कर्म कृतं पितुस्तद् ।
यत् त्वामगृह्णाद्विषमस्थबुद्धिं ।
* बुद्ध्यानयैवंविधया चरन्तं ।
सुनास्तिकं धर्मपथादपेतं ॥ ३२ ॥

* यथा हि चोरः स तथा हि बुद्धस्- ।
    तथागतं नास्तिकमत्र विद्धि ।
* तस्माद्धि यः शंक्यतमः प्रजानां ।
    न नास्तिकेनाभिमुखो बुधः स्यात् ॥ ३३ ॥
* त्वत्तो जनाः पूर्वतरे द्विजाश्च ।
    शुभानि कर्माणि बहूनि चक्रुः ।
* जित्वा सदेमं च परं च लोकं ।
    तस्माद्द्विजाः स्वस्तिकृतं हुतं च ॥ ३४ ॥
* धर्मे रताः सत्पुरुषैः समेतास्- ।
    तेजस्विनो दानगुणप्रधानाः ।
* अहिंसका वीतमलाश्च लोके ।
    भवन्ति पूज्या मुनयः प्रजानां ॥ ३५ ॥
* इति ब्रुवन्तं वचनं सरोषं ।
    रामं महात्मानमदीनसत्त्वं ।
* उवाच पथ्यं पुनरास्तिकं च ।
    सत्यं वचः सानुनयं च विप्रः ॥ ३६ ॥
* न नास्तिकानां वचनं ब्रवीम्यहं ।
    न नास्तिकोऽहं न च नास्ति किंचन ।
* समीक्ष्य कालं पुनरास्तिकोऽभवं ।
    भवेय काले पुनरेव नास्तिकः ॥ ३७ ॥

* स चापि कालो ऽयमुपागतः शनैर्- ।
यथा मया नास्तिकवागुदीरिता ।
* निवर्तनार्थं तव राम कारणात् ।
प्रसादनार्थं च मयैतदीरितं ॥ ३८ ॥

इत्ययोध्याकाण्डे सत्यप्रशंसा नाम नवाधिकशततमः सर्गः
॥ १०९ ॥

---

## CAPUT CX.

### STIRPIS IXVACUIDARUM PRAECONIUM.

क्रुद्धमाज्ञाय रामं तु वशिष्ठः प्रत्युवाच ह ।
जाबालिरपि जानीते लोकस्यास्य गतागतिं ॥ १ ॥
निवर्तयितुकामस्तु त्वामेतद्वाक्यमब्रवीत् ।
इमां लोकसमुत्पत्तिं लोकनाथ निबोध मे ॥ २ ॥
सर्वं सलिलमेवासीत् पृथिवी यत्र निर्मिता ।
ततः समभवद्ब्रह्मा स्वयंभूर्दैवतैः सह ॥ ३ ॥
स वराहस्ततो भूत्वा प्रोज्जहार वसुंधरां ।
असृजच्च जगत् सर्वं सह पुत्रैः कृतात्मभिः ॥ ४ ॥
आकाशप्रभवो ब्रह्मा शाश्वतो नित्यमव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ ५ ॥

विवस्वान् कश्यपाज्जज्ञे मनुर्विवस्वतः स्मृतः ।
स तु प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ ६ ॥
यस्येयं प्रथमं दत्ता समृद्धा मनुना मही ।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकं ॥ ७ ॥
इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः ।
कुक्षेरथात्मजो वीर विकुक्षिरुदपद्यत ॥ ८ ॥
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ।
बाणस्य च महाबाहुरनरण्यो महातपाः ॥ ९ ॥
नानावृष्टिर्बभूवास्मिन् न दुर्भिक्षं सतां वरे ।
अनरण्ये महाभागे तस्करो नापि कश्चन ॥ १० ॥
अनरण्यान्महातेजाः पृथू राजा बभूव ह ।
तस्मात् पृथोर्महाप्राज्ञस्त्रिशंकुरुदपद्यत ॥ ११ ॥
स सत्यवचनाद्वीरः सशरीरो दिवं गतः ।
त्रिशङ्कोरभवत् सूनुर्धुन्धुमारो महायशाः ॥ १२ ॥
धुन्धुमारान्महातेजा युवनाश्वो व्यजायत ।
युवनाश्वसुतः श्रीमान् मान्धाता समपद्यत ॥ १३ ॥
मान्धातुस्तु महातेजाः सुसंधिरुदपद्यत ।
सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् ॥ १४ ॥
यशस्वी ध्रुवसंधेस्तु भरतो रिपुसूदनः ।
भरतात् तु महाबाहोरसितो नाम जायत ॥ १५ ॥

यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ।
हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥ १६ ॥
तांस्तु सर्वान् प्रतिव्यूह्य युद्धे राजा प्रवासितः ।
. . . . . . Deest alter distichi versus. Cf. Râm. I, 70.
द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः ।
एका गर्भविनाशाय सपत्न्यै गरलं ददौ ॥ १८ ॥
ततः शैलवरे रम्ये बभूवाभिरतो मुनिः ।
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ॥ १९ ॥
तत्र चैका महाभागा भार्गवं देववर्चसं ।
ववन्दे पद्मपत्राक्षी काङ्क्षिणी पुत्रमुत्तमं ॥ २० ॥
तमृषिं समुपागम्य कालिन्दी त्वभ्यवादयत् ।
स तामभ्यवदत् प्रीतो वरेप्सुं पुत्रजन्मनि ॥ २१ ॥
पुत्रस्ते भविता देवि महात्मा लोकविश्रुतः ।
धार्मिकश्च सुभीमश्च वंशकर्तारिसूदनः ॥ २२ ॥
श्रुत्वा प्रदक्षिणं कृत्वा मुनिं तमनुमान्य च ।
ततः सा गृहमागम्य देवी पुत्रं व्यजायत ॥ २३ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
गरेण सह तेनैव जातः स सगरोऽभवत् ॥ २४ ॥
स राजा सगरो नाम यः समुद्रमखानयत् ।
इष्ट्वा पर्वाणि वेगेन त्रासयान इमाः प्रजाः ॥ २५ ॥

असमञ्जस्तु पुत्रोऽभूत् सगरस्येति नः श्रुतं ।
जीवन्नेव स पित्रा तु निरस्तः पापकर्मकृत् ॥ २६ ॥
अंशुमान् अस्य पुत्रोऽभूदसमञ्जस्य वीर्यवान् ।
दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथः ॥ २७ ॥
भगीरथात् ककुत्स्थश्च काकुत्स्था येन तु स्मृताः ।
ककुत्स्थस्य तु पुत्रोऽभूद्रघुर्येनासि राघवः ॥ २८ ॥
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।
कल्माषपादः सौदास इत्येवं प्रथितो भुवि ॥ २९ ॥
कल्माषपादपुत्रोऽभूच्छङ्खणस्त्विति नः श्रुतं ।
यस्तु तद्वीर्यमासाद्य सहसैन्यो व्यनीनशत् ॥ ३० ॥
शङ्खणस्य तु पुत्रोऽभूच्छूरः श्रीमान् सुदर्शनः ।
सुदर्शनस्याग्निवर्ण अग्निवर्णस्य शीघ्रगः ॥ ३१ ॥
शीघ्रगस्य मरुः पुत्रो मरोः पुत्रः प्रशुश्रुकः ।
प्रशुश्रुकस्य पुत्रोऽभूदम्बरीषो महामतिः ॥ ३२ ॥
अम्बरीषस्य पुत्रोऽभून्नहुषः सत्यविक्रमः ।
नहुषस्य च नाभागः पुत्रः परमधार्मिकः ॥ ३३ ॥
अजश्च सुव्रतश्चैव नाभागस्य सुतावुभौ ।
अजस्य चैव धर्मात्मा राजा दशरथः सुतः ॥ ३४ ॥
तस्य ज्येष्ठोऽसि दायादो राम इत्यभिविश्रुतः ।
तद्गृहाण स्वकं राज्यमवेक्षस्व जगन्नृप ॥ ३५ ॥

इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
पूर्वजे नावरः पुत्रो ज्येष्ठो राज्येऽभिषिच्यते ॥ ३६ ॥
स राघवेमं कुलधर्ममात्मनः ।
सनातनं नाद्य विहन्तुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं ।
प्रभूतराष्ट्रां पितृवन्महायशः ॥ ३७ ॥

इत्ययोध्याकाण्डे इक्ष्वाकुवंशकीर्तनं नाम दशाधिकशत-
तमः सर्गः ॥ ११० ॥

---

## CAPUT CXI.

### BHARATAS ADMONITUS.

वशिष्ठस्तु तदा राममुक्त्वा राजपुरोहितः ।
अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥
पुरुषस्येह जातस्य भवन्ति गुरवस्त्रयः ।
आचार्यश्चैव काकुत्स्थ पिता माता च राघव ॥ २ ॥
पिता ह्येनं जनयति माता संवर्धयत्यपि ।
प्रज्ञां ददाति चाचार्यस्तस्मात् स गुरुरुच्यते ॥ ३ ॥
स तेऽहं पितुराचार्यस्तव चैव परंतप ।
मम त्वं वचनं कुर्वन् नातिवर्तेः सतां गतिं ॥ ४ ॥

इमा हि ते परिषदः श्रेणयश्च समागताः ।
एषु तात चरन् धर्मं नातिवर्तेः सतां गतिं ॥ ५ ॥
वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्तितुं ।
अस्या हि वचनं कुर्वन् नातिवर्तेः सतां गतिं ॥ ६ ॥
भरतस्य वचः कुर्वन् याचमानस्य राघव ।
आत्मानं नातिवर्तेस्त्वं सत्यधर्मपराक्रमः ॥ ७ ॥
एवं मधुरमुक्तः सन् गुरुणा राघवः स्वयं ।
प्रत्युवाच समासीनं वशिष्ठं पुरुषर्षभः ॥ ८ ॥
यन्मातापितरौ वृत्तं तनये कुरुतः सदा ।
न सुप्रतिकरं तत् तु मात्रा पित्रा च यत् कृतं ॥ ९ ॥
यथाशक्ति प्रदानेन स्नापनोच्छादनेन च ।
नित्यं च प्रियवादेन तथा संवर्धनेन च ॥ १० ॥
स हि राजा दशरथः पिता जनयिता मम ।
आज्ञापयन्मां यत् तस्य न तन्मिथ्या भविष्यति ॥ ११ ॥
एवमुक्तो तु रामेण भरतः प्रत्यनन्तरं ।
उवाच विपुलोरस्कं सूतं परमदुर्मनाः ॥ १२ ॥
इह मे स्थण्डिले शीघ्रं कुशान् आस्तर सारथे ।
आर्यं प्रत्युपवेक्ष्यामि यावन्मे न प्रसीदति ॥ १३ ॥
अनाहारो निरालोको धनहीनो यथा द्विजः ।
शये पुरस्ताच्छालायां यावन्मां प्रतियास्यति ॥ १४ ॥

स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः ।
कुशोत्तरमवस्थाप्य भूमावेवास्तरत् स्वयं ॥ १५ ॥
तमुवाच महातेजा रामो राजर्षिसत्तमः ।
किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसे ॥ १६ ॥
ब्राह्मणो ह्येकपार्श्वेन नरान् रोद्धुमिहार्हति ।
न तु मूर्द्धाभिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥
उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतं ।
पुरवर्यामितः क्षिप्रमयोध्यां याहि राघव ॥ १८ ॥
आसीनस्त्वेव भरतः पौरजानपदं जनं ।
उवाच सर्वतः प्रेक्ष्य किमार्यं नानुशासथ ॥ १९ ॥
ते तदोचुर्महात्मानं पौरजानपदा जनाः ।
काकुत्स्थमभिजानीमः सम्यग्वदति राघवः ॥ २० ॥
एषोऽपि हि महाभागः पितुर्वचसि तिष्ठति ।
अत एव न शक्ताः स्म व्यावर्तयितुमञ्जसा ॥ २१ ॥
तेषामाज्ञाय वचनं रामो वचनमब्रवीत् ।
एवं निबोध वचनं सुहृदां धर्मचक्षुषां ॥ २२ ॥
एतच्चैवोभयं श्रुत्वा सम्यक् संपश्य राघव ।
उत्तिष्ठ त्वं महाबाहो मां च स्पृश तथोदकं ॥ २३ ॥
अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् ।
शृण्वन्तु मे परिषदो मन्त्रिणः श्रेणयस्तथा ॥ २४ ॥

न याचे पितरं राज्यं नानुशासामि मातरं ।
एवं परमधर्मज्ञं नानुजानामि राघवं ॥ २५ ॥
यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ।
अहमेव निवत्स्यामि चतुर्दश वने समाः ॥ २६ ॥
धर्मात्मा तस्य सत्येन भ्रातुर्वाक्येन विस्मितः ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनं ॥ २७ ॥
विक्रीतमाहितं क्रीतं यत् पित्रा जीवता मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥
उपाधिर्न मया कार्यो वनवासे जुगुप्सितः ।
युक्तमुक्तं च कैकेय्या पित्रा मे सुकृतं कृतं ॥ २९ ॥
जानामि भरतं क्षान्तं गुरुसत्कारकारिणं ।
सर्वमेवात्र कल्याणं सत्यसंधे महात्मनि ॥ ३० ॥
अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ ३१ ॥
वृतो राजा हि कैकेय्या मया तद्वचनं कृतं ।
अनृतान्मोचयानेन पितरं तं महीपतिं ॥ ३२ ॥

इत्ययोध्याकाण्डे भरतानुशासनं नाम एकादशाधिकशत-
तमः सर्गः ॥ १११ ॥

## CAPUT CXII.

### CALCEORUM TRADITIO.

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणं ।
विस्मिताः संगमं प्रेक्ष्य समुपेता महर्षयः ॥ १ ॥
अन्तर्हिता मुनिगणाः सिद्धाश्च परमर्षयः ।
तौ भ्रातरौ महाभागौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ ।
श्रुत्वा वयं हि संभाष्यमुभयोः स्पृहयामहे ॥ ३ ॥
ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः ।
भरतं राजशार्दूलमित्यूचुः संगता वचः ॥ ४ ॥
कुले जात महाप्राज्ञ महावृत्त महायशः ।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥
सदानृणमिमं रामं वयमिच्छामहे पितुः ।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६ ॥
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः ।
राजर्षयश्चैव तथा सर्वे स्वां स्वां गतिं गताः ॥ ७ ॥
ह्लादितस्तेन वाक्येन शुशुभे शुभदर्शनः ।
रामः संहृष्टवदनस्तान् ऋषीन् अभ्यपूजयत् ॥ ८ ॥

त्रस्तगात्रस्तु भरतः वाचा संसज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥
राजधर्ममिमं प्रेक्ष्य कुलधर्मानुसंततं ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनां ॥ १० ॥
रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे ।
पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा ॥ ११ ॥
ज्ञातयश्चापि योधाश्च मित्राणि सुहृदश्च नः ।
त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः ॥ १२ ॥
इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि ।
शक्तिमानसि काकुत्स्थ लोकस्य परिपालने ॥ १३ ॥
इत्युक्त्वा न्यपतद्भ्रातुः पादयोर्भरतस्तदा ।
भृशं संप्रार्थयामास राघवेति प्रियं वदन् ॥ १४ ॥
तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयं ॥ १५ ॥
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥ १६ ॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
सर्वकार्याणि संमन्त्र्य सुमहान्त्यपि कारय ॥ १७ ॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् शीततां त्यजेत् ।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८ ॥

कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतं ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥ १९ ॥
एवं ब्रुवाणं भरतः कौशल्यासुतमब्रवीत् ।
तेजसादित्यसंकाशं प्रतिपच्चन्द्रदर्शनं ॥ २० ॥
अधिरोहार्य पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥
सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च ।
प्रायच्छत् प्रीतिमान् भ्रात्रे भरताय महात्मने ॥ २२ ॥
स पादुके संप्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहं ॥ २३ ॥
फलमूलाशनो वीर भवेयं रघुनन्दन ।
तवागमनमाकाङ्क्षन् वसन् वै नगराद्बहिः ॥ २४ ॥
तव पादुकयोर्न्यस्य राज्यतन्त्रं परंतप ।
चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम ॥ २५ ॥
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनं ।
तथेति स प्रतिज्ञाय तं परिष्वज्य सादरं ॥ २६ ॥
शत्रुघ्नं च परिष्वज्य वचनं चेदमब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ २७ ॥
मया च सीतया चैव शप्तोऽसि रघुनन्दन ।
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ २८ ॥

स पादुके ते भरतः प्रतापवान् ।
स्वलंकृते संपरिगृह्य धर्मवित् ।
प्रदक्षिणं चैव चकार राघवं ।
चकार चैवोत्तमनागमूर्धनि ॥ २९ ॥
अथानुपूर्व्या प्रतिपूज्य तं जनं ।
गुरूंश्च मन्त्रीन् प्रकृतीस्तथानुजौ ।
व्यसर्जयद्राघववंशवर्धनः ।
स्थितः स्वधर्मे हिमवान् इवाचलः ॥ ३० ॥
तं मातरो बाष्पगृहीतकण्ठ्यो ।
दुःखेन नामन्त्रयितुं हि शेकुः ।
स चैव मातृरभिवाद्य सर्वा ।
रुदन् कुटीं स्वां प्रविवेश रामः ॥ ३१ ॥

इत्ययोध्याकाण्डे पादुकाप्रदानं नाम द्वादशाधिकशततमः सर्गः ॥ ११२ ॥

## CAPUT CXIII.

### BHARATAE REDITUS.

ततः शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः ॥ १ ॥
वशिष्ठो वामदेवश्च जावालिश्च दृढव्रतः ।
अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २ ॥
मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा ।
प्रदक्षिणं च कुर्वाणाश्चित्रकूटं महागिरिं ॥ ३ ॥
तस्य धातुसहस्राणि रम्याणि शिखराणि च ।
व्यत्यायंस्ते ऽनुपश्यन्तो भरतस्यानुयायिनः ॥ ४ ॥
अदूराच्चित्रकूटस्य ददर्श भरतस्ततः ।
आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः ॥ ५ ॥
स तमाश्रममासाद्य भरद्वाजस्य बुद्धिमान् ।
अवतीर्य रथात् पादौ ववन्दे रघुनन्दनः ॥ ६ ॥
ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् ।
अपि कृत्यं कृतं तात रामेण च समागतं ॥ ७ ॥
एवमुक्तः स तु तदा भरद्वाजेन धीमता ।
प्रत्युवाच भरद्वाजं भरतो धर्मवत्सलः ॥ ८ ॥

स याच्यमानो गुरुणा मया च दृढनिश्चयः ।
राघवः परमप्रीतो वशिष्ठं वाक्यमब्रवीत् ॥ ९ ॥
पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः ।
चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १० ॥
एवमुक्तो महाप्राज्ञो वशिष्ठः प्रत्युवाच ह ।
वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥
एते प्रयच्छ संहृष्टः पादुके हेमभूषिते ।
अयोध्यायां नरव्याघ्र योगक्षेमकरे तव ॥ १२ ॥
एवमुक्तो वशिष्ठेन राघवः प्राङ्मुखः स्थितः ।
पादुके हेमविकृते मम राज्याय ते ददौ ॥ १३ ॥
निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना ।
अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
भरद्वाजस्तु भरतं मुनिर्वाक्यमुदाहरत् ॥ १५ ॥
नैतच्चित्रं नरव्याघ्रे शीलवृत्तविदां वरे ।
त्वयि यदार्यवं तिष्ठेन्निम्ने वृष्टमिवोदकं ॥ १६ ॥
न मृतः स महाभागः पिता दशरथस्तव ।
यस्य त्वमीदृशः पुत्रो धर्मो विग्रहवानिव ॥ १७ ॥
तमृषिं तु महाप्राज्ञमुक्तवाक्यं कृताञ्जलिः ।
आमन्त्रयितुमारेभे चरणावुपगृह्य सः ॥ १८ ॥

ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनः पुनः ।
भरतस्तु ययौ श्रीमान् अयोध्यां सह मन्त्रिभिः ॥ १९ ॥
यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः ।
पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥
ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीं ।
ददृशुस्ते पुनः सर्वे गङ्गां शिवजलां नदीं ॥ २१ ॥
तां नक्रमकराकीर्णां संतीर्य सह बन्धुभिः ।
शृङ्गवेरपुरं राजा प्रविवेश ससैनिकः ॥ २२ ॥
शृङ्गवेरपुराद्भूय अयोध्यां संददर्श ह ।
भरतो दुःखसंतप्तः सारथिं चेदमब्रवीत् ॥ २३ ॥
सारथे पश्य विध्वस्ता सायोध्या न प्रकाशते ।
निराकारा निरानन्दा दीना प्रतिहतस्वना ॥ २४ ॥

इत्ययोध्याकाण्डे भरतप्रतिप्रयाणं नाम त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

---

## CAPUT CXIV.

### BHARATAE DISCESSUS.

स्निग्धगम्भीरघोषेण स्यन्दनेनोपयात् प्रभुः ।
अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥
विडालोलूकचरितामालीननरवारणां ।
तिमिराभ्याहतां कालीमप्रकाशां निशामिव ॥ २ ॥
राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभां ।
ग्रहेणाभ्युदितेनैकां रोहिणीमिव पीडितां ॥ ३ ॥
अल्पोष्णक्षुब्धसलिलां घर्मातप्तविहंगमां ।
लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥
विधूमामिव हेमाभामध्वराग्नेः समुत्थितां ।
हविरभ्युक्षितां पश्चाच्छिखां विप्रलयं गतां ॥ ५ ॥
विध्वस्तकवचां रुग्णां गजवाजिरथाकुलां ।
हतप्रवीरामापन्नां चमूमिव महाहवे ॥ ६ ॥

सहसा चलितां स्थानान्महीं पुण्यक्षयोद्धृतां ।
संहृतद्युतिविस्तारां तारामिव दिवश्च्युतां ॥ ७ ॥
भरतस्तु रथस्थः सन् श्रीमान् दशरथात्मजः ।
वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत् ॥ ८ ॥
किं नु खल्वद्य गम्भीरो मूर्छितो न निशाम्यते ।
यथापुरमयोध्यायां गीतवादित्रनिस्वनः ॥ ९ ॥
वारुणीमदगन्धश्च माल्यगन्धश्च मूर्छितः ।
धूपनागुरुगन्धश्च न प्रवाति समन्ततः ॥ १० ॥
यानप्रवरघोषश्च स्निग्धश्च हयनिस्वनः ।
मत्तनागनिनादश्च श्रूयते न यथा पुरा ॥ ११ ॥
गते रामे हि तरुणाः संतप्ता नोपभुञ्जते ।
बहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा नराः ॥ १२ ॥
तरुणीश्चारुवेशैश्च नरैरुन्नतगामिभिः ।
संपतद्भिरयोध्यायां न विभान्ति महापथाः ॥ १३ ॥
नोत्सवाः संप्रवर्तन्ते रामशोकार्दिते पुरे ।
न हि राजत्ययोध्येयं सासारेवार्जुनी क्षपा ॥ १४ ॥
कदा नु खलु मे भ्राता महोत्सव इवागतः ।
जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः ॥ १५ ॥
अयोध्यां स प्रविश्यैव विवेश भवनं पितुः ।
तेन हीनं नरेन्द्रेण सिंहहीनां गुहामिव ॥ १६ ॥

तदा तदन्तःपुरमुज्झितप्रभं ।
सुरैरिवोत्कृष्टमभास्करं दिनं ।
निरीक्ष्य सर्वत्र विभक्तमात्मवान् ।
मुमोच बाष्पं भरतः सुदुःखितः ॥ १७ ॥

इत्ययोध्याकाण्डे भरतप्रवेशो नाम चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥

---

## CAPUT CXV.

### Sedes Nandigrami delecta.

ततो निक्षिप्य मातॄस्ता अयोध्यायां दृढव्रतः ।
भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ॥ १ ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽद्य वः ।
तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥ २ ॥
गतश्चाहो दिवं राजा वनस्थश्च गुरुर्मम ।
रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
अब्रुवन् मन्त्रिणः सर्वे वशिष्ठश्च पुरोहितः ॥ ४ ॥

सुभृशं श्लाघनीयं च यदुक्तं भरत त्वया ।
वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ॥ ५ ॥
नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे ।
मार्गमार्यं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६ ॥
मन्त्रिणां वचनं श्रुत्वा यथाभिलषितं प्रियं ।
अब्रवीत् सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७ ॥
प्रहृष्टवदनः सर्वा मातॄः समभिवाद्य च ।
आरुरोह रथं श्रीमान् शत्रुघ्नेन समन्वितः ॥ ८ ॥
आरुह्य तु रथं शीघ्रं शत्रुघ्नभरतावुभौ ।
ययतुः परमप्रीतौ वृतौ मन्त्रपुरोहितैः ॥ ९ ॥
अग्रतो गुरवस्तत्र वशिष्ठप्रमुखा द्विजाः ।
प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतोऽभवत् ॥ १० ॥
बलं च तदनाहूतं गजाश्वरथसंकुलं ।
प्रययौ भरते याते सर्वे च पुरवासिनः ॥ ११ ॥
रथस्थः स तु धर्मात्मा भरतो भ्रातृवत्सलः ।
नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके ॥ १२ ॥
ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः ।
अवतीर्य रथात् तूर्णं गुरून् इदमभाषत ॥ १३ ॥
एतद्राज्यं मम भ्रात्रा दत्तं संन्यासवत् स्वयं ।
योगक्षेमवहे चेमे पादुके हेमभूषिते ॥ १४ ॥

भरतः शिरसा कृत्वा संन्यासं पादुके ततः ।
अब्रवीद्दुःखसंतप्तः सर्वं प्रकृतिमण्डलं ॥ १५ ॥
छत्त्रं धारयत क्षिप्रमार्यपादाविमौ मतौ ।
आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥ १६ ॥
भ्रात्रा तु मयि संन्यासो निक्षिप्तः सौहृदादयं ।
तमिमं पालयिष्यामि राघवागमनं प्रति ॥ १७ ॥
क्षिप्रं संयोजयित्वा तु राघवस्य पुनः स्वयं ।
चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ ॥ १८ ॥
ततो निक्षिप्तभारोऽहं राघवेण समागतः ।
निवेद्य गुरवे राज्यं भजिष्ये गुरुवर्त्तितां ॥ १९ ॥
राघवाय च संन्यासं दत्त्वेमे वरपादुके ।
राज्यं चेदमयोध्यायां धूतपापो भवाम्यहं ॥ २० ॥
अभिषिक्ते तु काकुत्स्थे प्रहृष्टमुदिते जने ।
प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणं ॥ २१ ॥
एवं तु विलपन् दीनो भरतः स महायशाः ।
नन्दिग्रामेऽकरोद्राज्यं पूजितो मन्त्रिभिः सह ॥ २२ ॥
स वल्कलजटाधारी मुनिवेशधरः प्रभुः ।
नन्दिग्रामेऽवसद्वीरः ससैन्यो भरतस्तदा ॥ २३ ॥
ततस्तु भरतः श्रीमान् अभिषिच्यार्यपादुके ।
तदधीनस्तदा राज्यं कारयामास सर्वदा ॥ २४ ॥

यदा हि यत् कार्यमुपैति किंचिद्- ।
उपायनं चोपहृतं महार्हं ।
स पादुकाभ्यां प्रथमं निवेद्य ।
चकार पश्चाद्भरतो यथावत् ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये चतुर्विंशतिसाहस्र्यां
संहितायां अयोध्याकाण्डे नन्दिग्रामनिवासो नाम
पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

---

FINIS LIBRI SECUNDI.

॥ शुभमस्तु सर्वजगतां ॥

---

## TABULA CAPITUM,
### quae secundo volumine continentur.

---

LIBER II.

---

EX OFFICINA TYPOGRAPHICA CAROLI GEORGII.